भा॰कौ॰ राजन्यकमिति। समूहेऽर्थे गोत्रोक्षोष्ट्रेति वुञ्। आपत्यस्य च तद्धितेऽनातीति यलोपाभावार्थं प्रकृतिभावविधानम्। यस्येति लोपे सत्यस ६४४
५७ ति वा विशेषाभावान्न तदर्थं प्रकृतिभावः। यौवनिकेति। यूनां भाव इति मनोज्ञादित्वाद्वुञ्। तत्र नस्तद्धित इति टिलोपः प्राप्तः प्रकृतिभावान्न भवति॥ नमपूर्वो॥ हैतनामन इति। हितनाम्नोऽपत्यमित्यण्। अन्निति प्रकृतिभावात्प्राप्ते टिलोपाभावः॥ ब्राह्मो॥ ब्राह्मशब्दोऽपत्येऽनपत्ये चेष्यते। ब्राह्मो मुहूर्तो ब्राह्मो नारदः ब्राह्मः स्थालीपाक इति। जातौ त्वपत्ये ब्राह्मण इतीष्यते। अनपत्ये तु जातौ ब्राह्मी ओषधिरिति टिलोप इष्यते। एतच्च यथाभिधानं न सिध्यतीति मत्वा पृच्छति। अथ किमिदमिति। यदि तावदिति। ब्रह्मणोऽपत्यमित्यण्। अल्लोपोन इत्यकारलोपः प्राप्तो न संयोगाद्वमन्तादिति निषिद्धः। नस्तद्धित इति टिलोपे प्राप्ते अन्निति प्रकृतिभावः प्राप्तो नमपूर्वोऽपत्येऽवर्म

राजन्यमनुष्ययुवानः। अके प्रकृत्या भवन्तीति वक्तव्यम्। राजन्यकम्। मानुष्यकम्। यौवनिकम्॥ नमपूर्वोऽपत्येऽवर्मणः॥ मपूर्वोऽन्प्रतिषेधे वा हितनाम्नः॥ मपूर्वोऽन्प्रतिषेधे वा हितनाम्न इति वक्तव्यम्। हैतनामः। हैतनामनः। आरोहितो हैतनामः। समानो हैतनाम इति॥ ब्राह्मो जातौ॥ अथ किमिदं ब्राह्मस्याजातौ अनो लोपार्थं वचनमाहोस्विन्नियमार्थम्। कथं चानो लोपार्थं स्यात्कथं च नियमार्थम्। यदि तावदपत्य इति वर्तते ततो नियमार्थमथ निवृत्तं ततो लोपार्थम्। अत उत्तरं पठति। ब्राह्मस्याजातौ लोपार्थं वचनं क्रियते। अपत्य इति निवृत्तम्। तत्राप्राप्तविधाने प्राप्तप्रतिषेधः। तत्राप्राप्तस्य टिलोपस्य विधाने प्राप्तस्य प्रतिषेधो वक्तव्यः। ब्राह्मणः। न वा पर्युदाससामर्थ्यात्। न वा वक्तव्यः। किं कारणम्। पर्युदाससामर्थ्यात्। पर्युदासोऽत्र भविष्यति।

ण इति प्रतिषिद्धः। ततष्टिलोपे प्राप्ते नियमार्थमिदम्। अजातावेवापत्ये टिलोपो भवति ब्राह्मो नारद इति। जातौ त्वपत्ये न भवति ब्राह्मण इति। एवमपत्ये सिध्यति व्यवस्था। अनपत्ये त्वन्निति प्रकृतिभावाद्ब्राह्मशब्दो न भवति। अथ निवृत्तमिति। अपत्यग्रहणे निवृत्ते विधिनियमसंभवे विधिरेव ज्यायानिति अनपत्ये अन्निति प्रकृतिभावे प्राप्ते जातौ टिलोपार्थं निपातनं भवति। तत्र ब्राह्मो मु- रामः
हूर्तो ब्राह्मः स्थालीपाक इति सिध्यति। ब्राह्मी ओषधिरिति न सिध्यति अजातावितिप्रतिषेधात्। ब्राह्मणी ओषधिरिति तु प्राप्नोति। अपत्ये जातौ ब्राह्मण इति न सिध्यति। नमपूर्वोऽपत्येऽवर्मण इति प्रकृतिभावप्रतिषेधाट्टिलोपप्रसङ्गात्। न वेति। वक्ष्यमाणोऽभिप्रायः। ॥ ५७

इतरस्त्वेतमभिप्रायमबुध्वाह। अस्त्यन्यदिति। ब्राह्मी ओषधिरित्यत्र कृतार्थः पर्युदासो ब्राह्मणादित्यत्र पूर्वसूत्रविहितप्रकृतिभावप्रतिषेधप्राप्तं टिलोपं ननिवर्तयेत्। नवै अत्रेष्यत इति। अजाताविति पर्युदासः न चानिष्टार्थशास्त्रप्रक्लृप्तिरिति पर्युदाससामर्थ्यादिह ब्राह्मण इत्यत्र टिलोपो न भविष्यतीत्यर्थः। इतरस्तु लक्षणमुपालब्धुमाहानिष्टं च प्राप्नोतीति। ब्राह्मणी ओषधिरिति प्राप्नोत्यजाताविति पर्युदासात्। इष्टं च न सिध्यति ब्राह्मण इति। एवं तर्हीति। योगविभागः क्रियत इति भावः। तत्र ब्राह्म इत्यत्र सामर्थ्यादपत्य इति न संबध्यते अपत्ये टिलोपस्य सिद्धत्वात्। तेनानपत्ये सर्वत्र जातावजातौ च ब्राह्म इति निपात्यते। अपत्येऽपि ब्राह्मोऽनार इदं इत्यत्र प

अस्त्यन्यत्पर्युदासे प्रयोजनम्। किम्। या जातिश्चनापत्यं ब्राह्मी ओषधिरिति नवै अत्रेष्यते। अनिष्टं च प्राप्नोति इष्टं च न सिध्यति। एवं तर्ह्यनुवर्ततेऽपत्य इति। नात्रापत्य इत्यनेन निपातनमभिसंबध्यते। ब्राह्म इति निपात्यते अपत्येऽजाताविति। किं तर्हि। प्रतिषेधोऽभिसंबध्यते। ब्राह्म इति निपात्यते अपत्ये जातौ नेति॥ कार्मस्ताच्छील्ये॥ किमर्थमिदमुच्यते। नस्तद्धित इत्येव सिद्धम्। न सिध्यति। अन्नणीति प्रकृतिभावः प्रसज्येत। अणीत्युच्यते। णश्चायम्। एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यः। ताच्छीलिकेऽणः कृतानि भवन्तीति। किमेतस्य ज्ञापने प्रयोजनम्। चौरी तापसी। अणन्तादितीकारः सिद्धो भवति॥ दाण्डिनायन॥ अत्र भ्रौणहत्येति किं निपात्यते। यकारादौ तद्धिते तत्वं निपात्यते। भ्रौणहत्ये तत्त्वनिपातनानर्थक्यं सामान्येन कृतत्वात्। भ्रौणहत्ये तत्त्वनिपातनमनर्थकम्। किं कारणम्। सामान्येन कृतत्वात्। सामान्येनैवात्र तत्त्वं भविष्यति। हनस्तोऽचिण्णलोरिति। ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य। एवं तर्हि ज्ञापयत्याचार्यस्तद्धिते तत्त्वं न भवतीति।

त्वाद्ब्राह्म इत्यनेनैव टिलोपो भवति। ततः अजाताविति। तत्रापत्य इत्यनुवर्तते तेनायमर्थो भवति अपत्य आतौ ब्राह्मण इति टिलोपो न भवति। अजाताविति प्रसज्यप्रतिषेधो भवति नानञः संबन्धादिति सर्वेष्टसिद्धिः॥ कार्मः॥ किमर्थमिति। कर्मशीलमस्य छत्रादिभ्यो ण इति णे कृते सिद्ध इति लोप इति भावः। ताच्छीलिक इति। एवं च छत्रादिभ्यो णेति लाघवाय कर्तव्यं णवचने प्रयोजनाभावात्। प्रज्ञाश्रद्धेति ज्वलितिकसन्तेभ्य इति तदस्याः प्रहरणमिति ङीब्भावः प्रयोजनम्। दाण्डिनायन॥ यकारादाविति। भ्रूणघ्नो भाव इति ब्राह्मणादित्वात् ष्यञ्। ज्ञापकं त्विति। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमित्यनपेक्ष्य ज्ञापकमुक्तं तदपेक्षायां तत्त्वस्याप्रसङ्गात्। ननु टिलोपाभावार्थं निपातनं स्यादिति सति प्रयोजने ज्ञापकत्वमनुपपन्नम्। नैष दोषः। उभयोरनित्ययोः परत्वाट्टिलोपं बाधित्वा तत्त्वं भविष्यति। अनेकप्रयोजनत्वाद्धि निपातनानाम्। अत एव कुत्वप्रतिषेधार्थमपि निपातनम्॥

ऐक्ष्वाक इति। इक्ष्वाकोरपत्यमिति जनपदशब्दादित्यञ्। उकारलोपो निपात्यते। ञित्वादाद्युदात्तत्वम्। इक्ष्वाकुषु जाताः इत्यणि प्राप्ते ओर्देशे ठञिति ठञि प्राप्ते तं परत्वाद्बाधित्वा जनपदतदवध्योश्चेति वृद्धादपि बहुवचनविषयादिति वुञि प्राप्ते कोपधादित्यण्। तत्रान्तोदात्तत्वम्। तत्र भिन्नस्वरयोरेकस्मिन्निपात्यमानेऽपरस्यासंग्रहादुभयमपि निपात्यम्। एकश्रुतिनिर्देशादिति। स्वरभेदप्रत्ययस्तमये न निपातनं सर्वस्वरलौकिकप्रयोगसंग्रहार्थमित्यर्थः। यथा नपुंसकमिति। सामान्यस्थितानाविर्भावतिरोभावस्थितिविशेषाणामन्तर्भावात्। मैत्रेय इति। मित्रयोरपत्यमिति गृष्ट्यादिभ्यश्चेति ढञ्। मित्रयु एय इति स्थिते ओर्गुण इति गुणापवादे ढे लोपोऽकद्र्वा इति लोपे प्राप्ते केकय

किमेतस्य ज्ञापने प्रयोजनम्। श्रौणघ्नो वार्त्रघ्न इत्यत्र तत्त्वं न भवति। ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन॥ ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन कर्तव्यम्। ऐक्ष्वाकः ऐक्ष्वाकः। एकश्रुतिनिर्देशात्सिद्धम्। एकश्रुतिः स्वरसर्वनाम। यथा नपुंसकलिङ्गं सर्वनाम। अथ मैत्रेये किं निपात्यते। मैत्रेये ढञि यादिलोपनिपातनम्। मैत्रेये ढञि यादिलोपो निपात्यते। इदं मित्रयुशब्दस्य चतुर्ग्रहणं क्रियते। गृष्ट्यादिषु प्रत्ययविध्यर्थं पाठः क्रियते। द्वितीयेऽध्याये यस्कादिषु लुगर्थं क्रियते। सप्तमेऽध्याये इयादेशार्थम्। इदं चतुर्थं यादिलोपार्थम्। द्विर्ग्रहणं शक्यमकर्तुम्। बिदादिष्वञ्प्रत्ययविध्यर्थं पाठः कर्तव्यः। तत्रैव वार्थो लुकाना पियादिलोपेन। इयादेशेनैव सिद्धम्। नैवं शक्यमिह हि मैत्रेयकः संघ इति संघाङ्कलक्षणेष्वञ्यञिञामण् इत्यण् प्रसज्येत। हिरण्मये किं निपात्यते। हिरण्मये यलोपवचनम्। हिरण्मये यलोपो निपात्यते। हिरण्मयकत्त्वं विभक्तौ न स्यात्। अथ हिरण्मये किं निपात्यते। हिरण्यये छन्दसि मलोपवचनात्सिद्धम्। हिरण्यये छन्दसि मलोपो निपात्यते। हिरण्ययी नौरभवत्। हिरण्ययाः पन्थान आसन्। हिरण्ययमासनम्॥ इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये षष्ठाध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम्॥ पादोऽध्यायः षष्ठश्च समाप्तः॥

मित्रय्विति यादेरियादेशे प्राप्ते लोपो निपात्यते। तल्लोपस्यासिद्धत्वाद्यस्येति लोपाभावादतो गुण इति पररूपमेकारः। द्वितीय इति। मित्रयवद्इति बह्वषु लुगर्थः पाठः। सप्तम इति। ढञ्न्यत्रेयादेशः मित्रयोरिदं मैत्रेयमिति। मैत्रेयक इति। मित्रयूनां संघ इति गोत्रे लुगचीति लकि प्रतिषिद्धे डजन्तात्प्रोत्र चरणाद्वुञिति वुञ्। यदि तु संघाङ्केत्यत्र न मैत्रेयादित्युच्यते तदानीं ग्रहणानि स्युरिति इह निपातनं न कर्तव्यं स्यादिष्टस्य सिद्धत्वात्। इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे षष्ठाध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम्। ॥ इति षष्ठोऽध्यायः समाप्तः॥

॥श्रीगणेशाय नमः॥ युवोरनाकौ॥ युवोरिति। समाहारद्वन्द्वे युवुनइति प्राप्नोति। इतरेतरयोगे तु य्वोरिति। तत्र सौत्रत्वान्निर्देशस्यनुमम
कृत्वोकारलोपं वा कृत्वा निर्देश इति न दोषः। केचित्तु कर्मधारयं व्याचक्षते। अवयवधर्मेण समुदायस्य व्यपदेशः। यथा समं चूर्णं कृ
तेनइति। एवं युश्चासौ समुदायो युवुलक्षणो वुश्चासौ वेति। तत्र समुदायस्याङ्गनिमित्तत्वासंभवादवयवयोर्यथासंख्यं कार्य
विज्ञानम्। यथा च भाष्यम्। कयोर्युवोरिति तन्थेतरेतरयोगे द्वन्द्व इति निर्णयः। अतिप्रसङ्गं मत्वा पृच्छति। कयोरिति। प्रत्यययोरिति।
अङ्गाधिकारादङ्गस्य निमित्ते यौ युवू तयोरनाकाविति सूत्रार्थाश्रयणात्। कथं पुनरिति। अङ्गाधिकारादङ्गस्यैव कार्यत्वं युक्तमि-
ति भावः। सिद्धान्तवादिना तु वैयधिकरण्येन संबन्धो दर्शयितव्यः संप्रति तु सामानाधिकरण्येन संबन्धमाश्रित्य समाधीयते। यु

युवोरनाकौ॥ युवोरनाकावित्युच्यते। कयोर्युवोरनाकौ भवतः। प्रत्यययोः। कथं पुनरङ्गस्येति वर्तमाने प्रत्यययोः
स्याताम्। युशब्दवुशब्दान्तमेतद्विभक्तावङ्गं भवति। यदि युशब्दवुशब्दान्तस्यानाकौ भवतः। सर्वादेशौ प्राप्नुतः। नि (इस्या)
र्दिश्यमानस्यादेशा भवन्तीत्येवं न भविष्यतः। यत्र तर्हि विभक्तिर्नास्ति नन्दनाकारिकेति। अत्रापि प्रत्ययलक्षणेन वि
भक्तिः। यत्र तर्हि प्रत्ययलक्षणं ।नास्ति नन्दनप्रियः कारकप्रिय इति। मा भूतां यासौ सामासिकी विभक्तिस्तस्याम्। या
सौ समासाद्विभक्तिस्तस्यां भविष्यतः। न चैतस्यां युशब्दवुशब्दान्तमङ्गं भवति।

शब्दवुशब्दान्तमिति। कृत्तद्धितान्तत्वाद्युवुशब्दान्तस्य प्रातिपदिकत्वाद्विभक्तावुत्पन्नायां सत्यङ्गत्वेनाकौ क्रियेते इत्यर्थः। यत्र त
र्हि विभक्तिर्नास्ति नन्दनाकारिकेति। लौकिके प्रयोगे अत्यन्तमत्र विभक्तेरभावः। अत्राहुः। विभक्तावुत्पन्नायामनाकयोः कृ
तयोरकारान्तलक्षणेन टापाभाव्यम्। ततो हल्ङ्यादिलोपेनेत्यानुपूर्व्या सिद्धमेतत्। यथा यासेति। ततश्चायं ग्रन्थोयमिति। नन्द
नकारकेति पाठो युक्तः। नन्दयुस इति स्थिते संबुद्धिगुणे कृते ऽकृते वा नित्यत्वादेङ्ह्रस्वात्संबुद्धेरिति लोपे कृते अङ्गत्वाभावा
द्वनाकाप्रसङ्गः। नन्दनप्रिय इति। अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति लुकि कृते न लुमताङ्गस्येति प्रत्ययलक्षणाप्रति
षेधादनाकयोरप्रसङ्गः

॥

भवेदिति। विशेषणविशेष्यभावे कामचारादङ्गेन युवू विशेष्येते। न च तावङ्गान्तौ संभवतः। न च विशेष्येण तदन्तविधिर्भवतीति यु
वुभ्यां तदन्तविध्यभावाद्यत्र तत्रस्थितयोरङ्गावयवयोर्युवोरनाकौ भवत इति। नन्दनदधीति। स्वमोर्नपुंसकादिति लुकि
नित्यत्वात्कृते न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधादादेशाप्राप्तिः। न वा परमिति। नहीह विभक्तिः प्रत्ययान्तरं वा परं नि
मित्तत्वेनोपात्तमिति प्रत्ययलक्षणेनाकयोर्नास्तीति न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधस्यायमविषयः। केवलमङ्ग
स्य युवोरनाकौ भवत इत्युच्यते। अस्ति हि प्रत्ययलक्षणेनाङ्गसंज्ञा। न हि तस्यां विधीयमानायां न लुमताङ्गस्येति निषेधः प्रवर्तते
लब्धाङ्गसंज्ञस्य कार्यान्तरे विधातव्ये स प्रतिषेधः प्रवर्तते। न चाङ्गसंज्ञाङ्गस्य कार्यमिति प्रतिषेधाभावः। ननु चाङ्गस्येत्यत्र

भवेद्यो युशब्दवुशब्दाभ्यामङ्गं विशेषयेत्। तस्यानन्त्ययोर्न स्याताम्। वयं खल्वङ्गेन युशब्दवुशब्दौ विशेषयि-
ष्यामः। अङ्गस्य युवोरनाकौ भवतो यत्र तत्रस्थयोरिति। यत्र तर्हि समासाद्विभक्तिर्नास्ति नन्दनदधि। कारकदधि। ए
वं तर्हि न वा परं निमित्तं संज्ञा च प्रत्ययलक्षणेन। न चेह परं निमित्तमाश्रीयते अस्मिन्परतो युवोरनाकौ भवत इति।
किं तर्हि। अङ्गस्य युवोरनाकौ भवत इति। अङ्गसंज्ञा भवति प्रत्ययलक्षणेन। अथवा तयोरेव यदङ्गं तन्निमित्तत्वे
नाश्रयिष्यामः। कथम्। अङ्गस्येति संबन्धसामान्ये षष्ठी विज्ञास्यते। अङ्गस्य यो युवू।

सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारे वव्रश्चेत्यत्रोरदत्वस्य परनिमित्तकत्वात् स्थानिवद्भावे सति न संप्रसारणे संप्रसारणमिति वका
रस्य संप्रसारणप्रतिषेध उक्तः सदूहत्येन न वा परं निमित्तमित्यनेन ग्रन्थेन विरुध्यते। नास्ति विरोधो लक्षणभेदात्। यथोद्देशं सं-
ज्ञापरिभाषमिति पक्षमाश्रित्य न वा परं निमित्तमित्याद्युक्तम्। कार्यकालं संज्ञापरिभाषमाश्रित्य वव्रश्चेत्युक्तम्। तत्र हि पक्षे उ
रदित्यत्राङ्गसंज्ञासूत्रोपस्थानात् संनिहितः प्रत्ययो निमित्तत्वेनाश्रीयत इति परनिमित्तत्वं भवति। यथोद्देशे तु भवतु कार्यकालपक्षस्तत्रापि
न दोष इति भावः। निमित्तत्वेनेति। अनाकादेशविधाने संबन्धसामान्ये षष्ठीति। निमित्तनिमित्तिभावलक्षणसंबन्धो नङ्गत्वा
दाश्रीयते। प्रत्ययनिमित्तत्वाच्चाङ्गव्यपदेशस्य प्रत्यययोरेव ग्रहणं विज्ञायते। ॥

धातुप्रतिषेधइति।नन्वधुनैवोक्तंप्रत्यययोर्ग्रहणमिति।सत्यमुक्तंनतुलभ्यते।सामानाधिकरण्येनसंबन्धसंभवेवैयधिकरण्यप-
स्याश्रयणस्यायुक्तत्वाद्भेदेहिनिमित्तनिमित्तिभावोभवति।अभेदेचसंभवतिकथंभेदआश्रीयते।अथवाभाष्यकारेणपूर्वस्वात-
न्त्र्येणोक्तमिदानींवार्त्तिकमवतारितमित्यदोषः।भुज्यादीनामिति भुज्यादीनांसंबन्धिनःप्रत्ययस्येत्यर्थः।सत्यपिवैयधिकरण्येनसंब
न्धेऽतिप्रसङ्गः।भुज्युरिति।भुजिमृङ्भ्यांयुक्त्युकौचेतियुक्प्रत्ययः।मृत्युरित्यत्रत्युप्रत्ययोनयुरितिमत्वाभाष्यकारेणमृत्युरिति
नोदाहृतम्।कंयुरिति।कंशंभ्यांबभयुस्तितुतयसइतियुस्प्रत्ययः।ननुसित्करणंपदत्वेसतिहल्यनुस्वारार्थमितितत्रएवादेशोनभ

किंचाङ्गस्ययुवू।निमित्तम्।ययोर्युवोरङ्गमित्येतद्भवति।कयोश्चैतद्भवति।प्रत्यययोः।युवोरनाकावितिचेद्धातुप्रति
षेधः॥युवोरनाकावितिचेद्धातुप्रतिषेधोवक्तव्यः।युत्वा।युतः।युतवान्।भुज्यादीनांचप्रतिषेधोवक्तव्यः।भुज्युः।किं
युः।शंयुः।अनुनासिकपरत्वात्सिद्धम्।अनुनासिकपरयोर्युवोर्ग्रहणम्।नचैतावनुनासिकपरौ।यद्यनुनासिकपरयो
र्ग्रहणम्।नन्दनः।कारकः।अत्रनप्राप्नुतः।नह्येताभ्यांयुशब्दवुशब्दाभ्यामनुनासिकंपरंपश्यामः।अनुनासिकपरत्वा
दिति।नैवंविज्ञायतेऽनुनासिकःपरआभ्यांताविमावनुनासिकपरौअनुनासिकपरत्वादिति।कथंतर्हि।अनुनासिकः
परोऽनयोस्ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति।यद्यनुनासिकपरयोर्ग्रहणमित्संज्ञाप्राप्नोति।तत्रकोदोषः
॥तत्रङीम्नुमोःप्रतिषेधः॥ङीम्नुमोःप्रतिषेधोवक्तव्यः।नन्दनकारकः।नन्दनाकारिका।उगिल्लक्षणौङीम्नुमौप्राप्नुतः॥धा
त्वन्तस्यचप्रतिषेधः॥धात्वन्तस्यचप्रतिषेधोवक्तव्यः।दिवुस्तिवुषिट्टित्करणंतुज्ञापकमुगित्कार्याभावस्य।यदयंयुश
ब्दवुशब्दौषिट्टितौकरोति।शिल्पिनिष्वुन्।ट्युट्युलौतुट्चेति।तज्ज्ञापयत्याचार्योनयुवोरुगित्कार्यंभवतीति।कथंकृत्वाज्ञा
पकम्।षिट्टित्करणएतत्प्रयोजनम्।षिट्टितईकारोयथास्यात्।

बिभ्यति।नैतदस्ति।अवग्रहायसित्वंस्यात्।अहल्त्वादावप्यनुस्वारार्थंवा।नह्येताभ्यामिति।रजःक्वुन्।वुन्।वुञ्।घुन्। इत्यादीनामेवप्र
सङ्गः।अनुनासिकःपरोऽनयोरिति।अवयवान्तरापेक्षयालब्धपरव्यपदेशोवयववर्णएवानुनासिकआश्रीयतेनान्यः।नचभुज्यु
रित्यादावुकारस्यसानुनासिकत्वंप्रतिज्ञातमितिदोषाभावः।इत्संज्ञाप्राप्नोतीति।लोपस्तुभवतुमावाभूदितिनविचार्यतेकृते
पिउकारलोपेऽवशिष्टस्यादेशविधानेनरूपनिष्पादनात्।धात्वन्तस्येति।दिवुइत्ययमपिअनुनासिकपरइत्यादेशप्रसङ्गः।

भा॰कै॰ नवा षित्करणमिति। ङीपि सतीकारोऽनुदात्तो भवति ङीषि तूदात्त इति तत्प्रयोजनेन ज्ञापकं षित्करणम्। टित्करणमिति। टिड्ढेत्यत्रानु
५९ पसर्जनादिति वर्तते अतो गित्वलक्षणो ङीप्यविशेषेण प्राप्नोत्यनुपसर्जनादेव यथा स्यादिति नियमार्थं टित्करणं स्यादित्यज्ञापकमु
गित्कार्याभावस्य विप्रतिषेधादिति। पूर्वविप्रतिषेधोऽत्र विवक्षितः। एवं तर्हीति। यदीह वाचीपरशब्दो न गृह्यते तदाऽनुवृत्तिर्वाक्य
भेदश्चाश्रीयतइत्यर्थः। एवमपीति। एकवाक्यताश्रयणेन पक्षे तु गुरु के तत्रादन्तादुगितः पर्यायेण टाप्ङीपोः प्रसङ्गः। एवं तर्हि सं

यदि चो गित्कार्यं स्यात्। षिट्टित्करणमनर्थकं स्यात्। पश्यति त्वाचार्यो न युवोरुगित्कार्यं भवतीति। ततो युशब्दवुशब्दौ
षिट्टौ करोति न नवा षित्करणं ङीष्विधानार्थम्। नैतदस्ति ज्ञापकम्। अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्। षित्कर
णं किं यत्नेङीष्विधानार्थम्। षित इति ङीष्यथा स्यात्। टित्करणमनुपसर्जनार्थम्। टित्करणे प्येतत्प्रयोजनमस्ति। अ
नुपसर्जनाट्टित इतीकारो यथा स्यात्। टितोऽनुपसर्जनाद्भवति। उगित उपसर्जनाच्चानुपसर्जनाच्च। एवं तर्हि विप्रतिषे-
धाट्टापो बलीयस्त्वं भविष्यति। टापोऽवकाशः। खट्वा। माला। ङीपोऽवकाशः। गोमती। यवमती। — । इहोभयं प्राप्नो
ति। नन्दना। कारिका। टाब्भवति विप्रतिषेधेन। नैष युक्तो विप्रतिषेधः। विप्रतिषेधे परमित्युच्यते। पूर्वश्च टाप्।
परो ङीप्। ङीपः परष्टाप् करिष्यते। सूत्रविपर्यासः कृतो भवति। एवं तर्हि उगितो ङीब्भवतीत्यत्रापि अतष्टाबित्यनुव
र्तिष्यते। एवमप्यकारान्तादुगित इहैव स्यात्। नन्दना। कारिका। गोमती। यवमतीत्यत्र न स्यात्। एवं तर्हि संबन्धा
नुवृत्तिः करिष्यते। अजाद्यतष्टाप्। ऋन्नेभ्यो ङीप्। अतष्टाप्। उगितश्च ङीब्भवति अतष्टाप्। वनो र च। वनो ङीब्भ
वति उगितः अतष्टाप्। पादोऽन्यतरस्यां ङीब्भवति उगित अतष्टाप्।

बन्धानुवृत्तिरिति। यद्यपि वाक्यभेदे न संबन्धे दोषाभावः। उगितो ङीब्भवति। अदन्तादुगितष्टाब्भवति। तथापि परिहारान्तरस
द्भाव प्रतिपादनायेदमुक्तम्। उगितश्च ङीब्भवतीति। अतष्टाबित्युत्तरार्थमत्रानुवर्तते। वनो र चेत्यत्रा न उगितष्टाबिति वर्तते राम:
तत्र वन्नन्तस्यानुगित्वाददन्तत्वासंभवाच्च वाक्यभेद आश्रीयते। वन्नन्तस्य ङीब्रौ भवतः। उगितोऽदन्तान्ङीबपवादष्टाबित्यस्यो ५०
त्तरत्रोपस्थानाय प्रतिसूत्रमनुवृत्तिं दर्शयति। टाबृचीत्यत्र टाब्ग्रहणं न कर्तव्यं भवतीति। यद्युत्तरत्रानुवृत्तिरुपयुज्यते टापः
स्वातन्त्र्यनिराकरणायात उगित इत्येताभ्यां संबन्धः॥

उगितोऽनडुतिनिवृत्तमिति। उगितइत्यस्य निवृत्तिराख्यायते। अनडुत्येतत् सर्वत्र प्रकरणेऽनुवर्तते। शितिर्ध्रीझलणीतिङीब्रुका रोमाभूतामिति। हुकवाकुरित्यत्र जातिलक्षणो ङीष् माभूदित्येवमर्थम्। धात्वन्तस्य चार्थवद्ग्रहणादिति। वर्णसमुदायग्रहणमिह न वर्णग्रहणमित्यर्थवद्ग्रहणपरिभाषोपतिष्ठते। प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय इत्ययमप्यत्र परिहारः संभवति। एवं गोमतीति। ईकारात्परो नुम् प्राप्तोऽझलन्तत्वान्न भवति। एवं नन्दनः कारक इत्यत्राझलन्तत्वान्नुमभावः। नचाविभक्ताविति। विभ

ततत्राचि। त्राचि च टाब्भवति। उगितोऽनडुतिनिवृत्तम्। तत्रायमप्यर्थः। द्विष्टाब्ग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते। सिध्यत्येवम्। यत्त्विदं वार्तिककारः पठति विप्रतिषेधाट्टापो बलीयस्त्वमिति। एतदसंगृहीतं भवति। एतच्च संगृहीतं भवति। कथम्। इष्टवाची परशब्दः। विप्रतिषेधे परं यदिष्टं तद्भवतीति॥ धात्वन्तस्य चार्थवद्ग्रहणात्। अर्थवतोर्युवोर्ग्रहणम्। न च धात्वन्तोऽर्थवान्॥ नुम्विधौ झल्ग्रहणम्॥ नुम्विधौ झल्ग्रहणं कर्तव्यम्। झलन्तस्य उगित इष्यते। उगिदचां सर्वनामस्थानेऽधातोर्झलन्त इति। तच्चावश्यं कर्तव्यम्। लिङ्गविशिष्टप्रतिषेधार्थम्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति। यथेह भवति। गोमान्। यवमान्। एवं गोमती यवमती इत्यत्रापि स्यात्॥ न वा विभक्तौ लिङ्गविशिष्टाग्रहणम्। न वा वक्तव्यम्। किं कारणम्। विभक्तौ लिङ्गविशिष्टग्रहणं नेत्येषा परिभाषा कर्तव्या। कः पुनरत्र विशेषः। एषा वा परिभाषा क्रियेत झल्ग्रहणं वेति। अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि। कानि। प्रयोजनं शुनः स्वरे। यथेह भवति। शुना शुने। शुन्या इत्यत्रापि स्यात्। यूनः संप्रसारणे प्रयोजनम्। यथेह भवति यूनः पश्येति।

क्तौ यत्कार्यं विधीयते लिङ्गविशिष्टस्य तन्न भवतीत्यर्थः। शुनेति। सावेकाच इति प्राप्तं विभक्तेरुदात्तत्वं न गोश्वन्निति प्रतिषिध्यते। शुन्येति। गौरादित्वान्ङीषि कृते उदात्तयणो हल्पूर्वादित्यस्य विभक्तिस्वरस्य प्रतिषेधप्रसङ्गः। ननु विभक्तेरेतत्कार्यं न तु विभक्तौ परतः पूर्वस्येति कथं लिङ्गविशिष्टपरिभाषायाः प्रतिषेधः। नैष दोषः। विभक्तेर्यत्कार्यं यच्च विभक्तौ परतः कार्यं तत्सर्वं विभक्तौ कार्यमिति सर्वत्र प्रतिषेधप्रवृत्तिः। ॥

 एवंयुवतीरिति। एवमर्थमनड्डूत्युभयोः शेषइतिनाश्रयितव्यंभवति। पथीति। समासैकदेशउदाहृतः। इतरएतावदेवोदाहृतमि 
तिमत्वाह। नकेवलइति। सुपथीति। शोभनःपन्था अस्यामितिबहुव्रीहिः। नपूजनादितिसमासान्तप्रतिषेधः। ऋन्नेभ्योङीबितिः
ङीप्। भस्यटेर्लोपइतिटिलोपः। सुपुंसीति। शोभनाःपुमांसोऽस्यामितिबहुव्रीहिः। उरःप्रभृतिषुपुमानितिविभक्त्यन्तपाठस्यप्रयोजन-
मुक्तम्। एकवचनान्तस्यैवनित्यःकब्यथास्यादिति। तेनात्रशेषाद्विभाषेतिविकल्पोभवति। पातेर्डुम्सुन्नितिप्रत्ययस्योगित्वादुगितश्चेति-

एवंयुवतीःपश्येत्यत्रापिस्यात्। उगिदचांनुम्विधौप्रयोजनम्। यथेहभवति। गोमान्। यवमान्। एवंगोमतीयवमतीत्यत्रा
पिस्यात्। अनडुह आम्विधौप्रयोजनम्। यथेहभवति। अनड्वानिति। एवमनडुहीत्यत्रापिस्यात्। नवाभवत्यनड्वाहीति।
भवत्यन्येनयत्नेन। आमनडुहःस्त्रियांवेति लिङ्गविशिष्टग्रहणादीकारान्तस्यप्राप्नोति। पथिमथोरात्वेप्रयोजनम्।
यथेहभवति। पन्थाः। मन्थाः। एवंपथीमथीत्यत्रापिप्राप्नोति। नकेवलःपथिशब्दःस्त्रियांवर्तते। उपसमस्तस्तर्हिवर्तते। सु
पथी। पुंसोऽसुङ्विधौप्रयोजनम्। यथेहभवति। पुमान्। एवंपुंसीत्यत्रापिस्यात्। नकेवलःपुंशब्दःस्त्रियांवर्तते। उपसम
स्तस्तर्हिवर्तते। सुपुंसीति। सख्युर्णित्वानङौप्रयोजनम्। यथेहभवति। सखा। सखायौ। सखायः। एवंसखीसख्यौसख्यइ
त्यत्रापिप्राप्नोति। भवद्भगवदघवतामोङ्गावेप्रयोजनम्। यथेहभवति भोः भगोः अघोरिति। एवंभवतीभगवत्यघवती
त्यत्रापिस्यात्। एतान्यस्याःपरिभाषायाःप्रयोजनानि। यदर्थमेषापरिभाषाकर्तव्या। एतस्यांचसत्यांनार्थोऽङ्गलुग्रहणे
नातदेतदनन्यार्थङ्गलुग्रहणंकर्तव्यंनुम्प्रतिषेधोवावक्तव्यः। उभयंनवक्तव्यम्। उपरिष्टात्ङ्गलुग्रहणंक्रियते।

ङीप्। सखीसख्याविति। सख्यशिश्वीतिभाषायामितिङीष्। अनङ्णित्वे अत्रप्राप्नुतः। ङीष्विधानंतुसखीभ्यामित्याद्यर्थंस्यात्। भ
वद्भगवदिति। यदासंबुद्ध्याभवदादयोविशेष्यन्तेतदाभवत्यादीनामपिप्रसङ्गः। यदात्ववशब्दोविशेष्यते तदायेननाव्यवधा 
नमित्येकवर्णव्यवधाने ओत्वंप्रवर्तते। भवत्यादौतुवर्णद्वयव्यवधानादोत्वाभावः। तदभावात्तत्संनियोगविहितस्यरुत्वस्याप्य 
भावइतिकेचिदाहुः। नार्थोऽङ्गलुग्रहणेनेति। गोमत्याद्यर्थेनेत्यर्थः। ॥

पुरस्तादिति।उगिदचांसर्वनामस्थानेधातोर्झलइति।ततोयुजेरसमासेनपुंसकस्याचइति।अत्रझलइतिवर्तते।उभयोःशेषइ
ति।युजेर्झलन्तत्वाव्यभिचारादाद्यन्तावेवयोगावपेक्ष्येते।झलितिलुप्तषष्ठीकंपदमाश्रीयते।शान्तनितरेति।शानिपातिभ्यांक
रणेल्युटिकृतेगौरादिषुशान्तनयातनेतिपाठान्ङीष्।उगितोयानदीति।उगिच्छब्दोच्चारणेनेतिभावः।इतरोगृहीताभिप्रायआह
।उगितएषेति।पूर्वेणैवाभिप्रायेणाह।उगितोयापरेति।उगिच्छब्दव्यापारेणविहितोगितःपरेत्यर्थः।इतरआह।अत्रचैवेति।इ

तत्पुरस्तादपकृष्यते।एवमपिसूत्रविपर्यासःकृतोभवति।एवंतर्हियोगविभागःकरिष्यते।उगिदचांसर्वनामस्था
नेधातोः।युजेरसमासे।ततोनपुंसकस्य।नपुंसकस्यतुमभवति।झलइत्युभयोःशेषः।ततोऽचः।अजन्तस्यचनपुंसक[illegible]स्यनुम्भ
वति।यद्यपितावदेतदुगित्कार्यपरिहृतम्।इदमपरंप्राप्नोति।शान्तनितरा।यातनितरा।उगितोनद्याघादिषुह्रस्वोभ
वतीत्यन्यतरस्यांह्रस्वत्वंचप्रसज्येत।नित्यंचेष्यते।उगितोयानदीएवमेतद्विज्ञायते।उगितएषानदी।

चै
उगितोयापरा।अत्रैवदोषोभवति।उगितोह्येषापरानदी।ऐषुमतितरायांचप्राप्नोति।उगितःपरायाविहिता।उ
गितएषाविहिता।उगितइत्येवंविहिता।एवमपिभोगवतितरायांदोषोभवति।भोगवतितरा।भोगवतीतरा।
तस्मादुगितोयानदी।उगितोयाविहितेत्येवमेतद्विज्ञास्यते।एवंविज्ञायमानेशान्तनितरायांदोषएव।

षवोस्यसन्तीतीषुमान्।तस्येदमित्यण्।ङीप्।यस्येतिलोपेकृतेउगितःपरानदीतिविकल्पेनह्रस्वत्वंप्राप्नोतिनित्यंचेष्यते।पूर्वो
क्तेनाभिप्रायेणाह।उगितोयापराविहितेति।ऐषुमतितरायांचाणन्तान्नदीविहितानतूगितः।इतरस्तुशान्तनितरामाश्रित्या
ह।उगितएषेति।भोगवतितरेति।शार्ङ्गरवादिषुभोगवद्गौरिमतोःसंज्ञायामितिपाठात्ङीन्प्रत्ययः।उगितइत्येवंनवि-
हितइतिविकल्पेनह्रस्वत्वंनप्राप्नोति।उगितस्तुविहितइतिविधानाश्रयणाद्विकल्पःसिध्यति।शान्तनितरायांतुविकल्पःप्राप्नोति।

भा॰कौ॰ सिद्धंत्विति।भाष्यकारीयमिदंवाक्यमित्याहुः।अन्येत्वनुनासिकपरत्वादितिवाक्यमेवानेनव्याख्यातमित्याहुः।अनुनासिकप्रधान ७ ११
५२ त्वादितिहितस्यार्थः।अनुनासिकपरौयुवूइहानुक्तौइत्यतिप्रसङ्गाभावः।उकारस्तुनिरनुनासिकएवेत्युगित्कार्याभावः॥आ
यने॥आयन्नादिष्विति।अङ्गाधिकारेविधानात्प्रकृतिप्रत्ययापेक्षाबहिरङ्गाआयन्नादयः।प्रत्ययाद्युदात्तत्वंतुप्रकृतिनिरपेक्ष
त्वादन्तरङ्गमितितदेवपूर्वंप्राप्नोतीत्युपदेशिवद्वचनंकर्तव्यम्।श्लिलेयमिति।श्लिवश्लिलेयम्।श्लिलायाढः।तिनिरिणप्रोक्तम
धीतेतित्तिरिवरतन्तुखण्डिकेतिछण्।अस्वरकाःस्युरिति।प्रवृत्तिकालापेक्षयेदमुच्यते।प्रयोगेतुस्वररहितस्याचउच्चारणाभावा

सिद्धंतुयुवोरनुनासिकत्वात्॥सिद्धमेतत्।कथम्।यकारवकारयोरेवेदमनुनासिकयोरिहग्रहणम्।सन्तिहि
यणःसानुनासिकानिरनुनासिकाश्च॥आयने॥ ॥आयन्नादिषुउपदेशिवद्वचनंस्वरसिद्ध्यर्थम्॥आयन्नादि
षूपदेशिवद्भावोवक्तव्यः।उपदेशावस्थायामायन्नादयोभवन्तीतिवक्तव्यम्।किंप्रयोजनम्।स्वरसिद्ध्यर्थम्।उ
पदेशावस्थायामायन्नादिषुइष्टःस्वरोयथास्यादिति।श्लिलेयम्।तैत्तिरीयः।अक्रियमाणेह्युपदेशिवद्भावेप्र
त्ययसंज्ञासंनियोगेनाद्युदात्तत्वेकृतेआन्तर्यतआदेशाअस्वरकाणामस्वरकाःस्युः॥

त्।अनुदात्तंपदमेकवर्जमितिवचनात्त्रानिष्टस्वराःप्राप्नुवन्ति।केचित्त्वान्तर्यतइत्यन्यथाव्याचक्षते।यथानुदात्तोच्चार
णेगात्राणांस्रंसनंस्वरस्यस्निग्धताकण्ठविवरस्यचमहत्त्वंचभवति।एवंव्यञ्जनोच्चारणेप्ययोग्यत्वादनुदात्तधर्मो रामः
पजनोव्यञ्जनेषुनास्तितदेवमस्वरकाणामुदात्तत्वरहितानामस्वरकाइष्टोदात्तत्वरहितत्वादनुदात्ताएवस्युरित्यर्थः। ५२

न वेति। सत्यप्यङ्गाधिकारेऽङ्गत्वमनपेक्ष्य प्रत्ययोत्पत्तिकाल एवायन्नादयो भवन्तीति चित्करणेन ज्ञाप्यते। तत्राङ्गानपेक्षत्वादसति बहिरङ्गत्वे परत्वान्नित्यत्वाच्च कृते घायन्नादिषु प्रत्ययाद्युदात्तत्वं भवतीतीष्टस्वरसिद्धिः। तत्रोणादिप्रतिषेध इति। ये त्वनुणादयः खलु घञादयस्तेषु खघयोरित्संज्ञया भाव्यम्। खित्यनव्ययस्य चजोः कु घिण्ण्यतोरिति लिङ्गात्। तद्धितेषु सावकाशेनादेशवि-

न वा क्वचिच्चित्करणात्॥ न वा वक्तव्यम्। किं कारणम्। क्वचिच्चित्करणात्। यदयं क्वचिद्घादींश्चितः करोति। अग्राद्यत्। घच्छौ च। तज्ज्ञापयत्याचार्यः उपदेशावस्थायामायन्नादयो भवन्तीति। कथं कृत्वा ज्ञापकम्। चित्करणस्य तत्प्रयोजनम्। चित इत्यन्तोदात्तत्वं यथा स्यात्। यदि चोपदेशावस्थायामायन्नादयो भवन्तीति ततश्चित्करणमर्थवद्भवति॥ तत्रोणादिप्रतिषेधः॥ तत्रोणादीनां प्रतिषेधो वक्तव्यः। शङ्खः। शण्ढः। धातोर्वा यड्वचनात्॥ अथवा यदयम् ऋतेरीयङिति धातोरीयङं शास्ति तज्ज्ञापयत्याचार्यो न धातुप्रत्ययानामायन्नादयो भवन्तीति। यदि हि स्युः ऋतेश्छङित्येव ब्रूयात्। सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति। न च ऋतेश्छङा सिध्यति। छङि सति वृद्धिलक्षण इट् प्रसज्येत। इट् कृतेऽनादित्वादादेशो न स्यात्। इदमिह संप्रधार्यम्। इट् क्रियतामादेश इति। किमत्र क पि
र्तव्यम्। परत्वादिडागमः। नित्य आदेशः। कृतेऽपीटि प्राप्नोत्यकृतेऽपि। अनित्य आदेशः। न हि कृत इटि प्राप्नोति। किं कारणम्। अनादित्वात्। अन्तरङ्गस्तर्ह्यादेशः। कान्तरङ्गता। इदानीमेवोक्तमायन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति। तदेतदृतेरीयङ्वचनं ज्ञापकमेव न धातुप्रत्ययानामायन्नादयो भवन्तीति। प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम्॥ प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम्। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि॥

धानेनैतत्संज्ञा न बाध्यते॥ नित्य आदेश इति। उपदेशे यः प्रत्ययादिस्तस्यादेश इति कृतेऽपीटि प्राप्नोति। अनादित्वादिति। सांप्रतिकं प्रत्ययादित्वमाश्रित्यादेशो विधीयते। प्रातिपदिकविज्ञानादिति। पक्षान्तरैरपि परिहाराः संभवन्तीत्यव्युत्पत्तिपक्षाश्रयः॥

भा॰कै॰ ॥श्नोन्तः॥ इह प्रत्ययग्रहणेऽनुवर्तमाने एकसमासनिर्दिष्टमादिग्रहणमप्यनुवर्तते। तथा च श्यान्तेत्यत्रानादित्वात् श्नस्यान्ता ७।१।१
प्र॰ देशो न स्यादिति प्रत्ययग्रहणं नानुवर्त्यमिति मत्वाह। श्नादेश इति। श्नकारोपदेशस्तु प्रत्ययइवलाघवार्थः स्यात्। श्यान्ताइति। शीङ्
उपसंवादाशङ्कयोश्चेति लेट्। तस्य श्नः। लेटोडाटावित्याडागमे टेरेत्वं वैतोन्यत्रेत्यैत्वं श्नान्तादेशः शबूलुक् शीङः सार्वधातुके
गुण इति गुणः। कथं पुनरिति। यदार्थाधिकारपक्षस्तु उपात्तार्थशब्दाधिकारपक्षो वा तदायं पर्यनुयोगः। वर्तिपदार्थस्य समुदाये-

श्नान्तः॥ श्नादेशे धात्वन्तप्रतिषेधः॥ श्नादेशे धात्वन्तस्य प्रतिषेधो वक्तव्यः। डक्षिताडक्षितुमिति। प्रत्ययाधिकारात्सिद्धम्। प्रत्ययग्रहणं प्रकृतमनुवर्तते। क्व प्रकृतम्। आयनेयीनीयियः फढखछघां प्रत्ययादीनामिति। प्रत्ययाधिकारात्सिद्धमिति चेन्नादेशादेशवचनम्। प्रत्ययाधिकारात्सिद्धमिति चेन्नादेशादेशो वक्तव्यः। अपि नः श्वो वा विजनिष्यमाणाः पतिभिः सह शयान्तै। एवं तर्हि प्रत्ययग्रहणमनुवर्तते आदिग्रहणं निवृत्तम्। कथं पुनः समासनिर्दिष्टानामेकदेशोऽनुवर्तते एकदेशो वा निवर्तते। असमासनिर्देशात्सिद्धम्। असमासनिर्देशः करिष्यते प्रत्ययस्यादीनामिति। स तर्ह्यसमासनिर्देशः कर्तव्यः। न कर्तव्यः। क्रियते न्यास एव। कथम्। अविभक्तिको निर्देशः। प्रत्यय आदीनामिति। तत्र श्यान्ताइत्यनकारान्तत्वादङ्गस्याद्भावप्रतिषेधः। तत्रैतस्मिन्प्रत्ययग्रहणेऽनुवर्तमान आदिग्रहणे निवृत्ते श्यान्तेइत्यनकारान्तत्वादङ्गस्याद्भावः प्राप्नोति तस्य प्रतिषेधो वक्तव्यः॥ सिद्धमनानन्तर्यादनकारान्तेनाद्भावनिवृत्तिः॥ सिद्धमेतत्। कथम्। अनानन्तर्यादनकारान्तेनाद्भावो न भविष्यति।

र्थेन्तर्भावात्पृथगनुवृत्त्यसंभवात्। यदा त्वनाश्रितार्थं शब्दमात्रं प्रतिज्ञातस्वरितत्वमनुवर्तत इति पक्षस्तदा नास्ति चोद्यावकाशः
।संख्याव्ययादेर्ङीबित्यतो दामहायनान्ताच्चेत्यत्राव्ययग्रहणाननुवृत्तावपि संख्याग्रहणानुवृत्तिदर्शनात्। तत्रेति। अन्तरङ्ग राम:
त्वाच्छपि कृते त्वादेशापवादोऽदादेशः प्राप्नोति। अनकारान्तादङ्गात्प्रत्ययस्य परत्वात्। सिद्धमिति। अनकारान्तेनाङ्गेन प्रा ५३
धान्यात्सकार एव विशेष्यते। तत्र व्यवधानाददादेशाभावः। अन्तादेशस्त्ववधिमनुपादाय विधीयमानो व्यवधानेपि भवति।॥

शेरत इति। प्रतिपदविधेर्बलवत्वाद्गुटि कृते व्यवधानाददादेशेन प्राप्नोति। निर्दिश्यमानस्यादेशा भवन्तीति वचनाज्झकारमात्रस्या
देशो विधीयते। तच्च रुटा व्यवधीयते। रुटिसंनियोगवचनादिति। आगमादेशयोः सहविधानादागमेन स्थानिनो व्यवधानाभावः। एव
मपि पर्याय इति। अद्भावे कृते रुट् न प्राप्नोति झस्य रुड्विधानादल्विधित्वात्स्थानिवत्त्वाभावाद्गुटि कृतेऽद्भावो न प्राप्नोति व्यवधानात्। न

कथं कृत्वा चोदितं कथं कृत्वा परिहारः। अनकारान्तग्रहणं प्रत्ययविशेषणमिति कृत्वा चोदितं झकारविशेषणमिति
कृत्वा परिहारः। यद्यनकारान्तग्रहणं झकारविशेषणं शेरते अत्र न प्राप्नोति। तत्र रुटिसंनियोगवचनात्सिद्धम्। तत्र रुटि
संनियोगः करिष्यते। क एष यत्नश्चोद्यते संनियोगो नाम। चकारः कर्तव्यः। रुट् च। किं च। यच्चान्यत्प्राप्नोति। किं चान्यत्प्राप्नोति। अद्भावः। स
तर्हि चकारः कर्तव्यः। न कर्तव्यः। योगविभागः करिष्यते। शीङः। शीङ उत्तरस्य झस्याद्भावो भवति। रुट्। रुट् च भवति शीङ
इति। एवमपि पर्यायः प्रसज्येत। एवं तर्हि अच्छब्दस्य रुटं वक्ष्यामि। तदच्छब्दग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृत
मनुवर्तते। क्व प्रकृतम्। अदभ्यस्तादिति। तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। शीङ इत्येषा पञ्चमी अदिति प्रथमा
याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति॥ शीङो रुट्॥ रुटि दृशिगुणप्रतिषेधः॥ रुटि दृशिगुणः प्राप्नोति। अ
दृश्रन्नस्य केतव इति तस्य प्रतिषेधो वक्तव्यः। न वक्तव्यः।

तो विरोधात्तुल्यबलत्वाच्च पर्यायप्रसङ्गः। एवं तर्हीति। अच्छब्दस्य रुटि सत्यवयवावयवोऽपि समुदायावयवो भवतीति रुटा व्यव
धानाभावाद्गुणः शीङः प्रवर्तते॥ शीङो रुट्॥ अदृश्रन्निति। दृशेर्लुङि झेरन्तादेशे इरितो वेत्यङि तत्रान्तरङ्गत्वाद्गुणात्पूर्वं रुटि
कृते ऋदृशोऽङि गुण इति गुणप्रसङ्गः। ॥

परस्मिन्निति। यदा क्ङिति चेत्यत्र निमित्तसप्तमीपक्षस्तदा कः परसप्तमीपक्ष आश्रितस्तदेतदुच्यते। वार्णादाङ्गं बलवदित्यनपेक्षितवर्णाश्रयत्वादन्तरङ्गे एकादेशे कृते तस्य परं प्रत्यादि बद्धा वा तु ङित्सार्वधातुकं परमाश्रित्य क्ङिति चेति गुणप्रतिषेधः प्रवर्तते। येन नाप्राप्तिन्यायेन अङ्गनिमित्त एव प्रतिषेधो गुणेन बाध्यते न तु ङित्सार्वधातुकनिमित्तः। प्रतिषेधाश्च बलीयांसो भवन्तीत्युभयप्रसङ्गे प्रतिषेधः प्रवर्तते। अदृश्रमिति। मिबादेशस्यामः पित्वाद् ङित्त्वाभावान्नास्ति गुणप्रतिषेधः। एवं तर्हीति। पूर्वान्ते हि सति अलघूपधत्वाद्गुणाभावः। लघूपधगुणस्यैव हि क्ङिति दृशोऽङि गुणादृतिगुणप्रत्यापत्तिः क्रियते। अथ वा गुणश्रुत्येक इत्युपस्थानात्तस्यैवाङ्गविशेषणादिति येन नाव्यवधानमित्येकवर्णव्यवहितस्य गुणो भवति ऋदृशिकृतेन न भवति। शेरत इति। ऋकिसत्यनिगन्तत्वाद्गुणाप्रसङ्गः।

परस्मिन्निमित्ते क्ङिति चेति निषेधो भविष्यति। एवमदृश्रमस्यकेतवदित्यत्रापि प्राप्नोति। एवं तर्हि पूर्वान्तः करिष्यते। पूर्वान्ते शीङो गुणविधिः॥ पूर्वान्ते शीङो गुणो विधेयः। शेरते। सूत्रं च भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं ऋदृशिगुणप्रतिषेध इति। पूर्वान्तेऽप्येष दोषः। कथम्। अयं दृशिगुणः प्रतिषेधविषय आरभ्यते स यथा क्ङिति चेत्येतं प्रतिषेधं बाधत एवमनुपधाया अपि प्रसज्येत। तस्मादुभाभ्यामेव दृशेरङ्प्रत्ययान्तरं वक्तव्यम्। पितरं च दृशेयं मानरं चादृशेयमित्येवमर्थम्।

पूर्वान्तेऽपीति। क्ङिति चेति गुणे प्रतिषिद्धे अपूर्वः ऋदृशोऽङि गुण इति गुणो विधीयते। स यथैव प्रतिषेधविषये प्रवर्तते तथैवानुपधाया अपीक् प्रवर्तेत। अङ्ग्रहणं च श्रुतत्वाद् दृशेरेव विशेषणं नेकः। दृशेरङ् प्रत्ययान्तरमिति। यश्च लिङ्याशिष्यङ्। यश्चेरितो वेत्यङ्। तत्प्रसङ्गे छन्दसि दृशेरङ् वक्तव्यः। अथ भाषायामदर्शन्नित्यत्र ङित्सार्वधातुकनिमित्तः प्रतिषेधः कस्मान्न भवति। क्ङितीति निमित्तसप्तमी विज्ञानाद् वार्णादाङ्गं बलीय इत्येकादेशात्पूर्वमेव गुणविधानाद्धा स्यानि बद्धा वाद्धा। एकादेशस्य व्यवधानात्कृतार्थस्य वा प्रतिषेधस्य परत्वाद् गुणेन बाधनात्।

झादेशोपि नित्य इति। द्वयोश्च नित्यत्वेन चानित्यत्वादाट इति न शक्यते वक्तुम्। झविशेषणपक्षेप्यभेदाश्रयेणाटो नित्यत्वम्। भेददर्शने तु शब्दान्तरप्राप्त्याऽप्यनित्यः। यदि प्राग्लादेशादिति। तदा प्रत्ययमात्रापेक्षत्वादाडन्तरङ्गः। वेतेर्विभाषा बहुलं छन्द

**झादेशादाट् लेटि॥**

झादेशादाट् लेटि भवति विप्रतिषेधेन। झादेशस्यावकाशः। लुनते लुनताम् अलुनत। अटोवकाशः। पताति दिद्युत्। उदधिं च्यावयाति। इहोभयं प्राप्नोति अपि त्वो वा विजनिष्यमाणाः पतिभिः सह शयान्ते। आट् लेटि भवति विप्रतिषेधेन। स तर्हि पूर्वविप्रतिषेधो वक्तव्यः॥ न वा नित्यत्वादाटः॥ न वा वक्तव्यः। किं कारणम्। नित्यत्वादाटः। नित्य आडागमः। कथं नित्यः। यद्यनकारान्तग्रहणं झकारविशेषणम्। अथ हि प्रत्ययविशेषणम्। झादेशेपि नित्यः। अन्तरङ्गलक्षणत्वाच्च। अन्तरङ्गः खल्वपि आडागमः। कथमन्तरङ्गः। यदि प्राग्लादेशाद्धात्वधिकारः। अथ हि लादेशे धात्वधिकारोनुवर्तते। उभयं समानाश्रयम्। यद्येवमनकारान्तग्रहणं प्रत्ययविशेषणम्। अथापि लादेशे धात्वधिकारोनुवर्तते। उभयथापि पूर्वविप्रतिषेधेन नार्थः। कथम्। बहुलं छन्दसीत्येवमत्रापि लुङ् भविष्यति। तत्रानत इति प्रतिषेधो भविष्यति। वेतेर्विभाषा॥ बहुलं छन्दसि। अतो भिस ऐस्। बहुलं छन्दसि। इदं बहुलं छन्दसीति द्विः क्रियते। एकं शक्यमकर्तुम्। कथम्। यदि तावत्पूर्वं क्रियते परं न करिष्यते अतो भिस ऐसित्यत्र बहुलं छन्दसीत्येतदनुवर्तिष्यते। अथ परं क्रियते न पूर्वं करिष्यते। बहुलं छन्दसीत्यत्र रुडप्यनुवर्तिष्यते। अपर आह। उभे बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम्। कथम्। इदमस्ति। वेतेर्विभाषा। ततः। छन्दसि च विभाषा। ततोतो भिस ऐस् भवति। छन्दसि विभाषेति॥

सि। अतो भिस ऐस् इत्यत्रेति। वाक्यभेदेन संबन्धाद्भाषायामपि ऐस् भवति। छन्दसि च विभाषेति। प्रत्ययमात्रस्य छन्दसि रुड्विधीयते विभाषा। व्यवस्थितविभाषाविज्ञानाच्च यथाप्रयोगं रुड्विधिः॥

अतोभिसऐस्॥ परत्वादिति॥ एत्वस्यावकाशो वृक्षेष्विति। ऐसोवकाशः कृतएत्वे। प्रागेवानुभयप्रसङ्गे परत्वादेत्वप्रसङ्गः। मु-
ख्यशब्दार्थाश्रयणेनानवकाशं मत्वा पृच्छति किमिति। ऐस्भाव इदानीमिति। कृतएत्वे इति। संप्रतिकाभावे भूतपूर्वगतिराश्रीयते। ननु
नाप्राप्तएत्वे ऐसारभ्यमाणस्तस्यापवादो युक्तः। उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः। एवं तर्हि पूर्वपक्षवादिनोत्सर्गापवा॥ ७९१

अतोभिसऐस्॥ इह वृक्षैः प्लक्षैरिति परत्वादेत्वं प्राप्नोति। एत्वे कृते विहतनिमित्तत्वादैस्त्वं न भविष्यति॥ एत्वं भिसि
परत्वाच्चेदतऐस्कं भविष्यति॥ ऐस्भाव इदानीं क्व भविष्यति॥ कृतएत्वे भौतपूर्व्यात्। कृतएत्वे भूतपूर्वमकारान्तमिति ऐस्भविष्यति॥
ऐस्तु नित्यस्तथा सति। एवं सति नित्यऐस्भावः कृतेपि एत्वे प्राप्नोत्यकृतेपि। नित्यत्वादैस्त्वे कृते विहतनिमित्तत्वादेत्वं
न भविष्यति॥ एत्वं भिसि परत्वाच्चेदतऐस्क्व भविष्यति। कृतएत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति॥ नेदमदसोरकोः
॥ इमैः अमीभिः प्रतिषेधावुच्येते ऽभौ शक्यावक्तुम्। कथम्। एवं वक्ष्यामि इदमदसोः कादिति। तन्नियमार्थं भविष्यति इदमदसोः
कादेव नान्यत इति॥ टाङसिङसाम्॥ किमर्थमिनादेश उच्यते। न नादेश एवोच्येत। का रूपसिद्धिः। वृक्षेण। प्लक्षेण।
एत्वे योगविभागः करिष्यते। कथम्। इदमस्ति बहुवचने झल्येत्। ओसि च। ततः आङि च। आङि च परतो ऽतएत्वं भव
ति वृक्षेण। प्लक्षेण। ततआपः। संबुद्धौ च। आङि च ओसि चेति। नैवं शक्यम्। इह हि अनेनेति इद्रूपलोपः प्रसज्यते। झलि लोपः
करिष्यते। न शक्यो झलि लोपः कर्तुम्। इह हि दोषः स्यात्।

दमनाश्रित्य चोदितमिति तदनुसारेणैव सिद्धान्तवादी परिहरति। ऐस्तु नित्य इति॥ टाङसिङसाम्॥ आङि चेति। स्थानिवद्भावान्ना रामः
देश एत्वं विज्ञायते। अनेनेति। तस्य हलादित्वाद्धलोपे सत्यनेनेति प्राप्नोति। झलि लोप इति। हलि लोप इत्यपनीय झलि लोप इति- ५५
सूत्रं कर्तव्यम्। नकारस्तु झल्त्वं भवतीति लोपाभावः॥

अयेति। इदमश्चतुर्थ्येकवचनस्य सुपां सुलुगिति यादेशः। तस्याश्च लादित्वादिद्रूपलोपाप्रसङ्गाद्धलि लोप इति वक्तव्यं तथा चानेनेति न सिध्यति। एवं तर्हीति। ।नश्च आश्चनापूतस्मिन्परत इदमोनादेश इतिसूत्रार्थ आश्रीयते। लुप्तनिर्दिष्ट इति। निर्दिश्यलुप्त इत्यर्थः। यद्येवं नलोपस्यासिद्धत्वाद्दीर्घत्वं प्राप्नोति यथा राजेति। नैष दोषः। छन्दोवत्सूत्राणि भवन्ति सुपां सुलुगिति लुकि कृते न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद्दीर्घत्वाभावः। सौत्र इति। सूत्रे कृतः सौत्रः कृतलब्धेत्यर्थः। अकारोच्चारणसामर्थ्यादिति। अन्यथा तकार एव विधीयेत। आदेः परस्येत्यादेस्तकारे विहिते संयोगान्तलोपे च वृक्ष इति सिध्यति। तदेवं भाष्यकारेणानादेशोऽदादेश्च

अयाविष्टेति। एवं तर्हि अनू लोपापवादो विज्ञास्यते। कथम्। एवं वक्ष्यामि। अनू ने च आपि चेति। तन्नकारग्रहणं कर्तव्यम्। न कर्तव्यम्। क्रियते न्यास एव। लुप्तनिर्दिष्टो नकारः। यद्येवं नोपधाया इति दीर्घत्वं प्राप्नोति। सौत्रो निर्देशः। अथवा नपुंसकनिर्देशः करिष्यते। अथ किमर्थमादित्युच्यते। न अदेवोच्येत। का रूपसिद्धिः। वृक्षात्। प्लक्षात्। सवर्णदीर्घत्वेन सिद्धम्। न सिध्यति। अतो गुणे पररूपत्वं प्राप्नोति। अकारोच्चारणसामर्थ्यान्न भविष्यति। यदि प्राप्नुवन्विधिरुच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति। यं विधिं प्रत्यकारोच्चारणमनर्थकं स विधिर्बाध्यते। यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। पररूपं प्रत्यकारोच्चारणमनर्थकं सवर्णदीर्घस्य पुनर्निमित्तमेव। ॥ङेर्यः॥ किमिदं चतुर्थ्येकवचनस्य ग्रहणमाहोस्वित्सप्तम्येकवचनस्य। कुतः संदेहः। समानो निर्देशः। चतुर्थ्येकवचनस्य ग्रहणं कथं ज्ञायते।

व्यवस्थापितः। अन्ये त्वतिजरसिनाऽतिजरसादिति सिद्धये इन आच्च विहिताविस्याहुः सन्निपातपरिभाषाया अनित्यत्वाज्जरसादेशं वदन्तः। भाष्यकारस्तु सन्निपातपरिभाषामाश्रित्य जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाव्यमिति मत्वा गौरवमुद्भावितवान्। ङेर्यः॥ कुतः संदेह इति। प्रयोगे वृक्षायेत्यादौ चतुर्थ्यर्थावगमादयुक्तः संदेह इति भावः। इतरो लक्षणमात्रशरणो भूत्वाह। समानोनिर्देश इति।

॥

लक्षणप्रतिपदोक्तयोरिति। चतुर्थ्येकवचनस्य ङे इति रूपं प्रतिपदोक्तम्। सप्तम्येकवचनस्य तु घेर्ङितीति गुणे कृते लाक्षणिकं रूपम्। इहापि तर्हीति। ङेरिति षष्ठ्यन्तं रूपमुपात्तं न त्वोभयोरपि लाक्षणिकमिति परिभाषाया अयमविषयः। अथ प्रत्ययात्पूर्वस्य भागस्य लाक्षणिकत्वप्रतिपदोक्तत्वसंभवापेक्षा परिभाषाप्रवृत्तिस्तदाऽन्यत्रापि प्रवर्तेत। एवं तर्हीति। लिङ्गदर्शनं चास्ति। तस्मै प्रभवति संतापादिभ्यः। तदस्यां प्रहरणमिति क्रीडायां ण इति॥ सर्वनाम्नः स्मै॥ अशुएकादिष्टत्वादिति। लोकेऽर्थप्रतिपादनाय वाक्यमु- 

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। इहापि तर्हि चतुर्थ्येकवचनस्य ग्रहणं स्यात्। ङेराम्नद्याम्नीभ्यः। एवं तर्हि व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति। इह चतुर्थ्येकवचनस्य ग्रहणं व्याख्यास्यामस्तत्र सप्तम्येकवचनस्येति॥ ॥सर्वनाम्नः स्मै॥ ॥अशुएकादिष्टत्वात्स्मायादीनामुपसंख्यानम्। अशुएकादिष्टत्वात्स्मायादीनामुपसंख्यानं कर्तव्यम्। अथो अत्रास्मै। अथो अत्रास्मात्। अथो अत्रास्मिन्। एकादेशे कृते अत इति स्मायादयो न प्राप्नुवन्ति। किं पुनः कारणम्। एकादेशस्य पूर्वान्तवद्भावात्। न पुनः स्मायादयः। न परत्वात्स्मायादिभिर्भवितव्यम्। न भवितव्यम्। किं कारणम्। नित्यत्वादेकादेशः॥ नित्य एकादेशः॥ कृतेष्वपि स्मायादिषु प्राप्नोत्यकृतेष्वपि। नित्यत्वादेकादेशे कृतेऽत इति स्मायादयो न प्राप्नुवन्ति। किमुच्यते अश इति। नाइहापि कर्तव्यम्। अत्रास्मै। अत्रास्मात्। अत्रास्मिन्निति। एकादेशे कृतेऽत इति स्मायादयो न प्राप्नुवन्ति। आनुपूर्व्यात्सिद्धमेतत्। नात्राकृतेषु स्मायादिषु हलादिर्विभक्तिरस्ति हलादौ चेद्रूपलोपः। न चाकृते इद्रूपलोपे एकादेशः प्राप्नोति। तदा आनुपूर्व्यात्सिद्धम्।

च्चार्यते तेन तद्वत्व्याकरणेऽपि विभज्यान्वाख्यायते। ततश्च अत्र अ ए इति स्थिते नित्यत्वादेकादेशः प्राप्नोति तस्मिन्कृते ऽदन्तत्वाभावा- 

द्गुणे विधावन्तादिवद्भावाभावात्तादृप्यानतिदेशात्स्मायाद्यसिद्धिरिति भावः। आनुपूर्व्येति। अत्र इदम् ए इति स्थिते त्यदा- 

द्यत्वे कृते स्मायादयः। ततो नित्यत्वाद्गुणं बाधित्वा इद्रूपलोपे कृते सवर्णदीर्घत्वेन रूपं सिध्यतीत्यर्थः। ॥

नवेति। पदद्वयाश्रयत्वादेकादेशो बहिरङ्गः। एकपदाश्रयत्वात्स्यायादयोन्तरङ्गाः॥ जसः शी॥ शीभावशिभावयोः क्वचिद्रूपाभेदं दृष्ट्वा प्रश्नः। किमर्थमिति॥ औङ आपः॥ किमर्थद्रूति। औङ इतिभूतानुवादः। न क्वचिदौङितिरूपं विज्ञातमभूत्तस्य च भूतवदुपादाने किं प्रयोजनमिति प्रश्नः। किमर्थद्रूति। औङ्त्युच्यमान इति। निरनुबन्धकपरिभाषयेति भावः। यद्यपि टकारः प्रत्याहारार्थत्वात्समुदायानुबन्धस्तथाप्यनेकान्ता अनुबन्धा इति दर्शनेएकान्ता इति दर्शने वा अवयवावयवस्यापि समुदायावयवत्वदर्शनात्प्रत्य

तत्रत्युपसंख्यानं कर्तव्यम्। न वा बहिरङ्गलक्षणत्वात्। न वा कर्तव्यम्। किं कारणम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षण एकादेशः। अन्तरङ्गाः स्यायादयः। असिद्धं बहिरङ्गमन्तरङ्गे॥ ॥जसः शी॥ ॥जश्शसोः शिः॥ ॥ किमर्थं शीभावः शिभावश्चोच्यते। न शिभाव एवोच्येत। का रूपसिद्धिः। ते। ये। के। आद्गुणेन सिद्धम्। नैवं शक्यम्। इह हि त्रपुणी। जतुनी। दीर्घश्रवणं न स्यात्। एवं तर्हि शीभाव एवोच्येत। नैवं शक्यम्। इह हि कुण्डानि वनानीति ह्रस्वस्य श्रवणं न प्रसज्येत। तस्माच्छीभावः शिभावश्च॥ ॥औङ आपः॥ ॥किमर्थौङ्कारः सामान्यग्रहणार्थः। औङित्युच्यमाने प्रथमाद्विवचनस्यैव स्यात्। अथापि औङित्युच्यते। एवमपि द्वितीयाद्विवचनस्यैव स्यात्। अस्ति प्रयोजनमेतत्। किं तर्हीति। ङित्कार्यं तु प्राप्नोति। खट्वे। माले। याडापद्रूति याट् प्राप्नोति। नैष दोषः। नैवं विज्ञायते ङकार इत् यस्य सोयं ङित्। तु ङितीति। कथं तर्हि। ङकार एव इत्। तु ङि। तु ङितीति। एवं तर्हि वर्णग्रहणमिदं भवति। वर्णग्रहणेषु चैतद्भवति यस्मिन्विधिस्तदादावल्ग्रहण इति। न दोषो भवति।

यस्याप्यनुबन्धः स्यात्प्रयोजनाभावात्प्रत्ययानुबन्धो न भविष्यतीति चेदिह तस्य ग्रहणं माभूदिति प्रयोजनं स्यात्। यद्येवमौङ्त्युच्यमाने तदनुबन्धकग्रहणे नातदनुबन्धकस्येति द्वितीयाद्विवचनग्रहणं न प्राप्नोति। ङकारोच्चारणसामर्थ्याद्भविष्यतीत्यदोषः। ङित्कार्यं त्विति। औङ इति वचनात्प्रथमाद्वितीयाद्विवचनयोरौङो विधायकं वाक्यमनुमीयत इत्युपदेशेन्त्यत्वान्ङकारस्येत्संज्ञायां सत्यां ङित्कार्यप्रसङ्गः।

॥

मा॰ कौ॰ अथवेति। ओङ् इति वर्णमात्रं निर्दिश्यते ङकारस्त्वसंदेहार्थो नानुबन्धार्थः। कद्रोरवितियथादकारः। अङ्गाक्षिप्तश्च प्रत्ययऔ ७११
५९ कारेणविशेष्यतइतिऔकारान्तस्यशीभावोविधीयमानोन्त्यवद्भावात्केवलस्याप्यौकारस्यप्रवर्तते। प्रत्ययस्यचानुबन्धभा
वाभावाभ्यांनिरनुबन्धकपरिभाषाव्यवस्थांकरोति नवर्णस्य। अथवेति। पूर्वाचार्यैर्द्विअपिद्विवचनेङितीपठिते। नचेहकचि
दप्यौङ् प्रत्ययोस्ति। सामान्यग्रहणार्थंचपूर्वसूत्रनिर्देशस्तेनयः पूर्वसूत्रे औङ् तस्यग्रहणंभवतीतिप्रथमाद्विती याद्विव
चनयोर्ग्रहणसिद्धिः। वर्णाश्रयमिति। औकारोवर्णएवनिर्दिष्टोनप्रत्ययइत्यर्थः। तेनङित्वेनदोषइति। ङित्वेसतियोदोषः सना
स्तिङित्वस्यैवाभावादित्यर्थः॥ अष्टाभ्यऔश्॥ औशग्याविति। औशादेशोनाप्राप्तेलुक्यारभ्यमाणोविशेषाभावात्सर्वस्यलुकोबा-

अथवावर्णग्रहणमिदंभवति। नचैतद्वर्णग्रहणेषुभवति। अननुबन्धकग्रहणेनसानुबन्धकस्येति। अथवापूर्व
सूत्रनिर्देशोयम्। पूर्वसूत्रेषुचयेऽनुबन्धानतैरिहेत्कार्याणिक्रियन्ते। औकारोयंशीविधौङिद्गृहीतोङिच्चास्माकंना
स्तिकोयंप्रकारः। सामान्यार्थस्तस्यचासञ्जनेस्मिन्ङित्कार्यंतेश्यांप्रसक्तंसदोषः॥ ङित्वेविद्या इर्णनिर्देशमात्रंवर्णोय
त्स्यात्तत्त्वविद्यात्तदादौ। वर्णाश्रयंतेनङित्वेनदोषोनिर्देशोयंपूर्वसूत्रेणवास्यात्॥ ॥अष्टाभ्यऔश्॥ औशग्यौ॥ औ
शग्याविति वक्तव्यम्। किमिदमग्याविति। अनुत्तरपदइति। किंप्रयोजनम्। इह माभूत्। अष्टपुत्रः। अष्टभार्यः। अ
सुलुक्तत्रा अस्तत्वौश्त्वं लुग्भविष्यति। षड्भ्योप्येवंप्रसज्यते। इहापितर्हि प्राप्नोति। अष्टौतिष्ठन्ति। अष्टौपश्येति।

धकः प्राप्नोतीतिभावः। इतरोयेननाप्राप्तिन्यायेनषड्भ्योलुगित्यस्यैवायमपवादः नसुपोधातुप्रातिपदिकयोरित्यस्यापीतिम
त्वाहास्त्विति। भवत्वौशादेशस्तस्यलुग्भविष्यतीत्यर्थः। एतच्चौशादेशप्रवृत्तिमभ्युपगम्योच्यते। नित्यत्वात्पूर्वमेवलुकाभाव्य
म्। अन्तरङ्गानपिविधीन्बहिरङ्गोलुग्बाधतइतिवा। इतरोलुकोविशेषमपश्यन्नन्यद्यपवादेप्रवृत्तेउत्सर्गः प्रवर्तितेनदातिप्रस रामः
ङ्ग इत्याह। षड्भ्यइति। सूत्रैकदेशानुकरणमेतत्। षड्भ्योलुगित्ययमयोगोलुक्प्राप्नोति। अथविधानसामर्थ्यान्नभवतित १८
दाष्टपुत्रइत्यत्रापिनप्राप्नोतीत्यर्थः। ॥

इतरो येन नाप्राप्ते तस्य बाधनमित्याश्रित्याह । अपवाद इति । षड्भ्यो लुगिति सर्वत्र प्राप्नोतीति स एवौशो बाध्यते सुपो धातुप्रातिपदिकयोरित्ययं तु क्वचित् प्राप्नोतीति तं प्रत्यस्य बाधकत्वायोगादन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति पूर्वमेव लुक् प्रवर्तते । यो वानन्तरादिति । औशः षड्भ्यो लुगित्ययमनन्तरः । द्वितीयाध्यायविहितस्तु व्यवहितः । ननु मध्येऽपवादा इति द्वितीयाध्यायविहितस्यैव लुको बाधः प्राप्नोति । नैष दोषः । यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहितसंस्कारोपजनितस्मृत्युपारूढस्य पूर्वस्य युक्तो बाधः । इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुङ् महता यत्नेन स्मरणीयोऽनन्तरस्त्वनुभवनीय इति स एव बाध्यते । अथवा सत्यामसत्यां चोपलब्धौ सत्या सत्याऽनन्तरस्यैव बाधेन भाव्यम् । एतच्च लु

अपवादः ॥ अपवादत्वादन्नौश्त्वं लुकं बाधिष्यते । इहापि तर्हि बाधेत । अष्टपुत्रः । अष्टभार्यः ॥ यस्य विषये ॥ यस्य लुको विषये औश्त्वं तस्यापवादः ॥ यो वानन्तरादनन्तरः ॥ अथवाऽनन्तरस्य लुको बाधकं भविष्यति । कुत एतत् । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । अथेह कस्मान्न भवत्यौश्त्वम् । अष्ट तिष्ठन्ति अष्ट पश्येति ॥ आत्वं तु यत्र तत्रौश्त्वम् ॥ यत्रैवात्वं तत्रैवौश्त्वेन भवितव्यम् । कुत एतत् ॥ तथा ह्यस्य ग्रहः कृतः ॥ तथा ह्यस्यात्वभूतस्य ग्रहणं क्रियते अष्टाभ्य इति । ननु च नित्यमात्वम् । एतदेव ज्ञापयत्याचार्यः । विभाषा आत्वमिति । यदयमात्वभूतस्य ग्रहणं करोति अष्टाभ्य इति । इतरथा अष्टन इत्येव ब्रूयात् । औशश्चाव लुलुक्तत्र षड्भ्योऽप्येवं प्रसज्यते ।

कः समकक्ष्यत्वमभ्युपगम्याक्रम् । भिन्नकक्ष्यौ त्वेतौ लुकौ । एकस्य सर्वत्र प्राप्त्याऽपरस्य क्वचित् प्राप्त्या । अथेहेति । अष्टाभ्य इति विभक्तौ लक्षणवशादाकारो निर्दिष्टौ श्रुक्त औशं विषयविशेषे व्यवस्थापयितुम् । आत्वं तु यत्रेति । कृताकारस्यानुकरणमष्टाशब्दः । ननु चेति । लक्षणवशाद्विभक्तावात्वं विधाय निर्देशः कृत इति चोद　काशयः । एतदेवेति । लाघवार्थमष्टन इति वक्तव्ये कृतात्वस्येदमनुकरणम् । तस्य चैतत्प्रयोजनं कृतात्वाद्यथा स्यादकृतात्वान्मा भूदिति । यदि च नित्यमात्वं स्यात्तदाव्यवच्छेद्याभावात्कृतात्वानुकरणमनर्थकं स्यात्तस्मात्कृतात्वानुकरणनिर्देश आत्वविकल्पस्य ज्ञापकः ॥

स्वमोरिति। उत्तरसूत्रोपस्थाप्यमानार्थसंग्रहः॥ स्वमोर्नपुंसकात्॥ तदिति। तदोः सः सावितिसत्वमप्यत्रप्राप्नोति। नित्योलुगिति
। अत्वंतुलुकिकृतेनलुमताङ्गस्येतिप्रत्ययलक्षणप्रतिषेधाद्विभक्त्यभावान्नप्राप्नोतीत्यनित्यम्। अनित्योलुगिति। यस्यलक्षणान्त
रेणनिमित्तंविहन्यतेनतदनित्यमित्येतत्तु पाक्षिकम्। यदाद्वयोर्लक्षणयोः संप्रधारणंक्रियतेतदायल्लक्षणप्रवृत्तावपियस्यद्वितीयस्यल
क्षणस्यप्रवृत्तिव्याघातोनास्तितत्प्रतिनतस्यदौर्बल्यंलक्षणान्तरेणचैतत्प्रवृत्तिनिवारणत्। यथावालिसुग्रीवयोर्युद्धेभगवताप
मेणवालिनोवधेपिनसुग्रीवापेक्षंदौर्बल्यमभिदधतिश्रूरमानिनः। एतद्दर्शनसंश्रयेणोच्यते। यस्यचलक्षणान्तरेणेति।
यदात्वेषन्यायआश्रीयतेलक्षणान्तरप्रवृत्तिनिमित्तमुपसंहरतुलक्षणंबलवद्भवतिद्वतरत्तुतदुपसंहृतनिमित्तलक्षणान्त

अपवादोयस्यविषयेयोवातस्मादनन्तरः॥ आत्वंहियत्रतत्रौम्स्त्वंतथाह्यस्यग्रहः कृतः। स्वमोर्लुक्चत्यदा
दीनांकृतेह्यत्वेनलुग्भवेत्॥ स्वमोर्नपुंसकात्॥ स्वमोर्लुक्त्यदादिभ्यश्चेतिवक्तव्यम्। इहापियथास्यात्। त
द्ब्राह्मणकुलमिति। किंपुनः कारणंनसिध्यति॥ कृतेह्यत्वेनलुग्भवेत्॥ अत्वेकृतेलुङ्प्राप्नोति। इदमिह
संप्रधार्यम्। अत्वंक्रियतांलुगिति। किमत्रकर्तव्यम्। परत्वादत्वम्। नित्योलुक्। कृतेप्यत्वेप्राप्नोत्यकृते
पि। अनित्योलुक्। नहिकृतेअत्वेप्राप्नोति। अतोमित्यम्भावेनभवितव्यम्। तस्मात्त्यदादिभ्यश्चेतिवक्तव्यम्।
इदंविचार्यते। शिशीलुङ्नुम्विधिषुनपुंसकग्रहणंशब्दग्रहणंवास्यादर्थग्रहणंवेति।

रोपपादितप्रवृत्तिविघातंदुर्बलमेव। यथाचभगवद्वासुदेवसहायत्वात्पाण्डवाबलिनोदुर्बलान्धार्तराष्ट्रान्विजिग्यिरे तदानास्ते
वयस्यचलक्षणान्तरेणेति। केचित्तुअन्तरङ्गानपिविधीन्बहिरङ्गोलुग्बाधतइत्यत्रापिग्रहणन्नित्यानांचपरेषांचलुकाबाधन-
मिच्छन्तस्त्यदाद्यत्वंलुकाबाध्यतइत्याहुः। तथाचोच्यते। सर्वविधिभ्योलुग्विधिर्बलवानिति। शिशीति। अङ्गस्येत्यनुवर्तनादङ्गस्य
यऔङ्नपुंसकात्परस्तस्यशीतिविज्ञायमानेशब्दग्रहणंभवति। यदाप्यङ्गादितिविभक्तिविपरिणामआश्रीयते नपुंसकेनचा- राम॰
ङ्गंविशेष्यतेनपुंसकान्तादङ्गात्परस्येतितदापिशब्दग्रहणम्। यदातुनपुंसकाद्योविहितइत्याश्रीयतेप्रधानंवानपुंसकमङ्गेन ५९
विशेष्यतेनपुंसकादङ्गात्परस्येतितदार्थग्रहणंशब्दद्वारकंचार्थेनपौर्वापर्यादिकमाश्रीयते। ॥

प्रियसक्थ्नेति। नपुंसकस्य झलचइत्यतो नपुंसकग्रहणमस्थ्यादिसूत्रे नपुंसकसंज्ञाशब्दनिवृत्त्यर्थमनुवर्तते। यद्यपि अभिव्य-क्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थं तेषु कर्तव्यः शब्देषु न तदुक्तिष्विति संज्ञाशब्दानामप्रसङ्गः। तथापि न्यायानुसर-णे गौरवप्रसङ्गाद् नपुंसकानुवृत्तिराश्रीयते। उत्तरार्थं च। ईच द्विवचन इत्यत्र नपुंसकस्येति पुंवदिति चानुवर्तते तेन नच्छन्दसि न-पुंसकस्य पुंवद्भावान्मयोगे हलानीत्यादौ नुमभावसिद्धिः। सिद्धं त्विति। विषयविभागाश्रयेणाभिमतार्थसिद्धिः। शिशीलुङ्नुम्विधिषु

कश्चात्र विशेषः। शि शी लुङ् नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः॥ शि शी लुङ् नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधो वक्तव्यः। बहुत्रपुः। बहुत्रपू। बहुत्रपव इति। अस्तु तर्ह्यर्थग्रहणम्। यद्यर्थग्रहणं प्रियसक्थ्ना ब्राह्मणेनेत्यत्रानङ् प्राप्नोति। अस्तु तर्हि शब्दग्रहणमेव। ननु चोक्तं शि शी लुङ् नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेध इति॥ सिद्धं तु प्रकृतार्थविशेषणत्वात्॥ सिद्धमेतत्। कथम्। प्रकृतस्यार्थो विशिष्यते। किं च प्रकृतम्। अङ्गम्। अङ्गस्य शि शी लुङ् नुमो भवन्ति नपुंसके वर्तमानस्य। कथं प्रियसक्थ्ना ब्राह्मणेन। अस्थ्यादिषु शब्दग्रहणम्। अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम्। युक्तं पुनरिदं विचारयितुम्। नन्वनेनासंदिग्धेनार्थग्रहणेन भवितव्यम्। न हि नपुंसकं नाम शब्दोऽस्ति। किं तर्ह्युच्यतेऽस्थ्यादिषु शब्दग्रहणमिति। अत्राप्यर्थग्रहणमेव।

र्थग्रहणमस्थ्यादिषु शब्दग्रहणमित्यर्थः। अस्थ्यादिष्विति। विशेषणविशेष्यभावे कामचारात् नपुंसकलिङ्गविशिष्टास्थ्यादिभिरङ्गं विशेष्यत इति नपुंसकास्थ्याद्यन्तस्याङ्गस्य नपुंसकस्याप्यनङ् भवति। पदाङ्गाधिकारे तस्य च ग्रहणं तदुत्तरस्य पदस्य चेति वचनात् केवलानामप्यस्थ्यादीनामनङ् भवति। इदानीं भाष्यकारो विचारमेव पूर्वोक्तमाक्षिप्यमाण आह। युक्तं पुनरिति। अर्थमनपेक्ष्य शब्दग्रहणपक्षासंभवदिति भावः। किं तर्ह्युच्यत इति। नैवेदं वक्तव्यमित्यर्थः। ॥

कस्मादिदानींनवक्तव्यमित्याह। अत्रापीति। अर्थधर्मत्वाल्लिङ्गस्यनपुंसकार्थाभिधायित्वादस्यादयोनपुंसकशब्देनाभिधीयन्त ७ २१
इत्यर्थग्रहणमेवभवति। तस्माद्विशेषणविशेष्यभावेकामचारएवयुक्तः। ननुयथेष्टसिद्धावङ्गत्वादसंभवादेकतरपक्षग्रहणा-
विचारः। अड्डुतरादिभ्यः पञ्चभ्यः॥ अड्डावद्दति। सुस्थानिकेऽदादेशेऽयंदोषः। अमादेशेत्वदिस्थानिवद्भावादमिपूर्वरूपंसिद्धमिति।
सिद्धंत्विति। अनुनासिकत्वेननिर्दिश्यतेतेनोच्चारणार्थोऽकारोऽद्कारमात्रंत्वादेशः। आदेः परस्येत्यमआदेर्भवति। मकारस्यतु

अत्रैतावान्संदेहः। क्वप्रकृतस्यार्थोविशेष्यते। क्वगृह्यमाणस्येति। शिशीलुङ्‌ग्विधिषुप्रकृतस्यार्थोविशेष्य
तेअस्यादिषुगृह्यमाणस्य॥ अड्डुतरादिभ्यःपञ्चभ्यः॥ अड्डावेपूर्वसवर्णप्रतिषेधः॥ अड्डावेपूर्वसवर्णस्यप्रति
षेधोवक्तव्यः। कतरत्तिष्ठति। कतरत्पश्यति। सिद्धंत्वनुनासिकोपधात्। सिद्धमेतत्। कथम्। अनुनासिकोपधोऽ
च्छब्दः करिष्यते॥ दुक्करणाद्वा॥ दुकुडतरादीनामितिवक्ष्यामि॥ डित्करणाद्वा॥ अथवाडिच्छब्दः करिष्यते। सत
हिडकारः कर्तव्यः। नकर्तव्यः। क्रियतेन्यासएवाद्दिडकारकोनिर्देशः। अड्डुतरादिभ्यःपञ्चभ्यः। नेतराच्छन्दसि
॥ इतराच्छन्दसिप्रतिषेधेएकतरात्सर्वत्र॥ इतराच्छन्दसिप्रतिषेधेएकतरात्सर्वत्रेतिवक्तव्यम्। एकतरंतिष्ठति
एकतरंपश्य। नपुंसकादेशेभ्योयुष्मदस्मदोर्विभक्त्यादेशाविप्रतिषेधेन। नपुंसकादेशेभ्योयुष्मदस्मदोर्विभक्त्या
देशाभवन्तिविप्रतिषेधेन। नपुंसकादेशानामवकाशः॥ त्रपुत्रपुणीत्रपूणि॥

संयोगान्तलोपः। उच्चारणार्थानांत्वनुनासिकत्वप्रतिज्ञायांनुवोवचिरितिवच्यादीनांनुम्प्रसङ्गः। एतस्मिन्पक्षेहेकतरदित्यत्र
संबुद्धिलोपप्रसङ्गंमत्वाह। दुक्करणाद्वेति। कार्यिभेदाच्चदुकालुङ्‌बाध्यते। द्विडकारकइति। दकारस्यष्टुत्वंस्वरूपविनाशप्रसङ्गा- रा·ग·
न्नकृतंनापिडकारस्यसंयोगान्तलोपः॥ नेतरा॥ नपुंसकादेशेभ्यइति। अलिङ्गेयुष्मदस्मदीइत्यनाश्रित्यायंविचारः। स्वोजसमौ ५९
लुकृशीश्यःपरत्वादमाबाध्यन्तइत्यर्थः॥ ॥

युष्मदस्मद्भ्यां ङसोऽश् ॥ किमर्थमिति। अकारस्याकारवचने प्रयोजनाभावादादेः परस्येत्यस्यानुपस्थानादलोन्त्यस्येति सकारस्याकारः। अतो गुण इति पररूपेण सिद्धमिति भावः। इतरस्त्वस्त्यकारस्याकारवचने प्रयोजनमिति मत्वाह। शित्सर्वस्येति। अन्तरेण

युष्मदस्मदोर्विभक्त्यादेशानामवकाशः। त्वं ब्राह्मणः। अहं ब्राह्मणः। युवां ब्राह्मणौ। आवां ब्राह्मणौ। यूयं ब्राह्मणाः। वयं ब्राह्मणाः। इहोभयं प्राप्नोति। त्वं ब्राह्मणकुलम्। अहं ब्राह्मणकुलम्। युवां ब्राह्मणकुले। आवां ब्राह्मणकुले। यूयं ब्राह्मणकुलानि। वयं ब्राह्मणकुलानि। युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन। अथेदानीं युष्मदस्मदोर्विभक्त्यादेशेषु पुनःप्रसङ्गात् शिशीलुङ्नुम्विधयः कस्मान्न भवन्ति। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव। युष्मदस्मद्भ्यां ङसोऽश् ॥ किमर्थः शकारः। सर्वादेशार्थः। शित्सर्वस्येति सर्वादेशो यथा स्यात्। नैतदस्ति प्रयोजनम्। अक्रियमाणेऽपि शकारेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्याकारे कृते त्रयाणामकाराणामतो गुणे पररूपत्वे सिद्धं रूपं स्यात्। तवस्वम्। ममस्वम्। यद्येतल्लभ्येत कृतं स्यात्। तत्तु न लभ्यम्। किं कारणम्। अत्र हि तस्मादित्युत्तरस्य आदेः परस्येत्यकारस्य प्रसज्येत। अत उत्तरं पठति। ङस आदेशे शित्करणानर्थक्यमकारस्याकारवचनानर्थक्यात् ॥ ङस आदेशे शित्करणमनर्थकम्। किं कारणम्। अकारस्याकारवचनानर्थक्यात्। अकारस्याकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेणापि शकारं सर्वादेशो भविष्यति ॥ अर्थवत्त्वादेशे लोपार्थम् ॥ अर्थवत्त्वकारस्याकारवचनम्। कोऽर्थः। आदेशे लोपार्थम्। यः सशेषे लोपः आदेशे स विज्ञायते।

विशकारं सर्वादेशो भविष्यतीति। आद्यनुसंहाराभावे अन्त्यानुसंहारादिद्वयोरकारयोः पररूपमित्यर्थात्सर्वादेशः संपद्यते। यः सशेषे लोप इति। अनादेशे आत्वयत्वविधानादादेशः शेषः। ॥

ननु चेति। शेषे लोप इत्यत्र विभक्तावित्यनुवर्त्तते तद्विशेषणं च शेषग्रहणमित्यादेशो विभक्तिरिति विज्ञायते। न हि तशादिविधिरस्ति यत आदेशाद्वाविति विज्ञायेत। तस्मात्त्यप्यादेशादित्वे विभक्तेरनादेशत्वान्नैवायं शेषः। ततो नास्त्यकारस्याकारवचने प्रयोजनम्। सर्वे सर्वपदादेशा इत्यादिविकारद्वारेण विभक्तेरेवादेशा विधीयन्त इति विभक्तेरेवादेशः स्यादिति शित्त्वं सर्वादेशार्थं क्रियते। सर्वे पदादेशा इत्यत्र पदशब्देन न सुप्तिङन्तमुच्यते। किं तर्हि। पद्यते प्रतीयतेऽर्थोऽनेनेति अन्वयव्यतिरेकाभ्यां कल्पिता-भ्यां यस्य कल्पितार्थवत्ता तदभिधीयते तत्रानन्यार्थादकारविधानादेकदेशद्वारेण विभक्तेरेवादेशः। प्रश्लिष्टनिर्देश इति। तत्श्चाकार इत्यलक्षणः समुदायोऽनेकाल्त्वात्सर्वादेशः प्रवर्त्तते। तस्मिन्प्रवृत्तेऽतो गुण इति पररूपमिति सिद्धमिष्टम्। ङे प्रथमयोरम्॥ प्राधान्यलक्षणस्य प्रथमार्थस्येहासंभवात्संनिवेशापेक्षयाद्यस्य तावद्ग्रहणं विज्ञायते तत्र विशेषज्ञानाय पृच्छ

ननु चादेशो या विभक्तिरित्येवमेतद्विज्ञायते। आदेश एषा विभक्तिः। कथम्। सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते। तस्माच्छित्करणम्। तस्माच्छकारः कर्त्तव्यः। न कर्त्तव्यः। क्रियते न्यास एव। कथम्। प्रश्लिष्टनिर्देशोऽयम्। अ अ इति। सोऽनेकाल्शित्सर्वस्येति सर्वस्य भविष्यति॥ ॥ङे प्रथमयोरम्॥

॥प्रथमयोरित्युच्यते। कयोरिदं प्रथमयोर्ग्रहणम्। किं विभक्त्योराहोस्वित्प्रत्यययोः। विभक्त्योरित्याह। कथं ज्ञायते।

ति। कयोरिति। ॥यदि स्त्रीलिङ्गनिर्देशस्ततो विभक्त्योर्ग्रहणेन भाव्यम्। पुंल्लिङ्गे न निर्देशे तु प्रत्यययोः। तत्र यद्यन्तरङ्गं प्राथम्यमाश्रीयते ततः पुंल्लिङ्गेन निर्देशात्प्रत्ययग्रहणम्। वर्गस्यासमाप्तावेव प्रत्यययोः प्राथम्यसंप्रत्ययात्। अथ तु सपूर्वायाः प्रथमाया विभाषा प्रथमायाश्च द्विवचने इत्यत्र प्रसिद्धिराश्रीयते ततः स्त्रीलिङ्गनिर्देशाद्विभक्तिग्रहणम्। प्रत्ययग्रहणपक्षे च युष्मदस्मदोः प्रातिपदिकत्वात्प्रातिपदिकप्रत्यययोः सुऔ इत्यनयोर्ग्रहणेन भाव्यम्। ननु द्वयोः कथं प्राथम्यं यावता-द्यापेक्षया परस्य द्वितीयत्वम्। नैष दोषः। राश्यपेक्षया समुदायस्य प्राथम्याविरोधात्। प्रथमसाहचर्याद्वा द्वितीयस्यापि प्र-थमव्यपदेशः। यथार्धर्चाः पुंसि चेति गोमयादीनामर्धर्चव्यपदेशः। ॥

परत्वात्तिसृभाव इति। शब्दान्तरप्राप्त्या नुमनित्यः। तिसृभावस्तु नुमि कृते तेन व्यवधानान्न प्राप्नोतीत्यनित्यः। स हि यद्यपि त्रिश-
ब्दान्तस्याङ्गस्य विधीयते तदुक्तत्वाच्च नुमव्यवधायकस्तथापि निर्दिश्यमानस्यादेशा भवन्तीति त्रेरेव तिसृभावेन भाव्यं स
च नुमा व्यवहित इति तिसृभावस्याप्राप्तिस्तदेवमुभयोरनित्ययोः परत्वात्तिसृभावः। त्रपूणामिति॥ सत्यज्ग्रहणे द्वयोर-
पि नुम्नुटोरनित्यत्वाद्विप्रतिषेधे सति नुमचिरतृज्वद्भावेभ्यो नुडिति पूर्वविप्रतिषेधान्नुड्भवति। तस्मिंश्च नामीति दीर्घत्व-
म्। असति त्वज्ग्रहणे कृताकृतप्रसङ्गित्वान्नित्यत्वान्नुमेव स्यात्। नुडर्थो यत्न इति। अज्ग्रहणं च कर्तव्यं पूर्वविप्रतिषे-

किमत्र कर्तव्यम्। परत्वात्तिसृभावः। अथेदानीं तिसृभावे कृते पुनःप्रसङ्गविज्ञानान्नुम् कस्मान्न भवति। सकृद्गतौ विप्र-
तिषेधे यद्बाधितं तद्बाधितमेवेति। अत उत्तरं पठति। इकोऽचि विभक्तावज्ग्रहणं नुम्नुटोर्विप्रतिषेधार्थम्। इकोऽचि वि-
भक्तावज्ग्रहणं क्रियते नुमो नुड् विप्रतिषेधेन यथा स्यात्। त्रपूणां जतूनाम्। इतरथा हि नुमो नित्यनिमित्तत्वान्नुड-
भावः। अक्रियमाणेऽपि वै अज्ग्रहणेऽवश्यमत्र नुडर्थो यत्नः कर्तव्यः। पूर्वविप्रतिषेधो वक्तव्यः। इदं तर्हि प्रयोजनम्।
नुटि कृते नुम्मा भूदिति। किं च स्यात्। त्रपूणां जतूनां नामीति दीर्घत्वं न स्यात्। मा भूदेवं नोपधाया इत्येवं भविष्यति। इह
तर्हि त्रुचीनाम्। इन्हन्पूषार्यम्णां शौ। सौ चेत्यस्मान्नियमान्न प्राप्नोति दीर्घत्वम्। अर्थवद्ग्रहणे नानर्थकस्येत्येवं न भवि-
ष्यति। नैषा परिभाषा शक्या विज्ञातुम्। इह हि दोषः स्याद्राज्ञीति। एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति॥
उत्तरार्थं च। उत्तरार्थं तर्ह्यज्ग्रहणं कर्तव्यम्। अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः। अजादौ यथा स्यात्। इह मा भूत्। अ-
स्थिभ्याम् अस्थिभिः। यद्युत्तरार्थं तत्रैवायमज्ग्रहणं कुर्वीत। इह हि क्रियमाणे यदि किंचित्प्रयोजनमस्ति तदुच्यताम्।

धश्च वक्तव्य इति यत्नद्वयमाश्रयणीयं तत्राज्ग्रहणमकृत्वैव एक एव नुडर्थो यत्नः कर्तव्य इत्यर्थः। नुटि कृते इति। यत्नान्तरेण नुटि कृ-
ते नुम् प्राप्नोतीत्यर्थः। किं च स्यादिति। नलोपे कृते दोषाभावं मन्यते। नामीति नलोपस्य सुब्विधावसिद्धत्वादजन्तत्वाभावात्। इह तर्हीति।
इन्हन्निति नियमः सर्वस्योपधालक्षणस्य दीर्घत्वस्येति व्याख्यातम्। नैषेति। अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेनेति वचनात्। तथा
च वाग्मिन इत्यादावपि नियमाद्दीर्घाभावः। तत्रैवायमि ति। एवं हि स्वरितत्वं न प्रतिज्ञेयं भवति। प्रत्यक्षश्रुतिसंभवे चानुमानं नाश्र यि-
तव्यं भवति॥

॥

हेत्रपुहेत्रपोद्गूति। हेत्रपुङ्गूति प्रासेहेत्रपोङ्गूतिर्भवतीत्यर्थः। केचित्तु रूपद्वयमिच्छन्त इत्याहुः। कचित्प्रत्ययलक्षणं नुमनालुप्तायामपि 
संबुद्धौ भवतीत्येतदज्ग्रहणेन ज्ञाप्यते न तु सर्वत्रेति तेन वदन्ति॥ तृतीयादिषु॥ किमिहेति। अन्यत्र परशब्दाश्रयाणि कार्याणि अतिदिश्यन्ते
न तु स्वाश्रयकार्याभावः। इह तु विपर्ययो दृश्यत इति मत्वा प्रश्नः। कथं पुनरिति॥ पुंवदित्यनेन नुम्प्रतिषेधोऽत्र क्रियते। अतिदेशे हि पुंसि नु
म्प्रतिषेधो विहितः। कामचारश्चेति। यत्र क्रियाशब्देनोपात्ता तत्र कामचारः। न तु ब्राह्मणवत्क्षत्रिये वर्तितव्यमित्यादावुपात्तक्रिये

इहापि क्रियमाणे प्रयोजनमस्ति। किम्। अजादौ यथा स्यात्। इह मा भूत्। त्रपुजतु। एतदपि नास्ति प्रयोजनम्। विभक्तावि
त्युच्यते। न चात्र विभक्तिं पश्यामः। प्रत्ययलक्षणेन। न लुमताङ्गस्येति प्रत्ययलक्षणस्य प्रतिषेधः। एवं तर्हि सिद्धे सति
यद् अज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामेति। किमेतस्य ज्ञापने प्र
योजनम्। हे त्रपु हे त्रपो। अत्र गुणः सिद्धो भवति। इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्। स्वरो वै श्रूयमाणेऽपि लुप्ते
किं न भविष्यति। एयात्वं तिसृभावश्चाव्यवधानात् नुमा अपि। नुड्युच्यते तदर्थं तु इह किंचित्त्रपो इति॥ तृतीयादिषु भाषित
पुंस्कं पुंवद्गालवस्य॥ किमिह पुंवद्भावेनातिदिश्यते। नुम्प्रतिषेधः। कथं पुनः पुंवदित्यनेन नुम्प्रतिषेधः शक्यो विज्ञा
तुम्। वतिनिर्देशोऽयम्। कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम्। तद्यथा। उशीनरवन्मद्रेषु यवाः सन्ति
न सन्ति। मातृवदस्याः कलाः सन्ति न सन्तीति। एवमिहापि पुंवद्भवति पुंवन्न भवतीति वाक्यशेषं समर्थयिष्याम
हे। यथा पुंसो नुम्भवति एवं तृतीयादिषु भाषितपुंस्कस्यापि न भवतीति। किमुच्यते नुम्प्रतिषेध इति न पुनरन्यदपि
पुंसः प्रतिपदं कार्यमुच्यते यत्तृतीयादिष्वजादिषु विभक्तिषु भाषितपुंस्कस्यातिदिश्येत। अनारम्भात् पुंसि। न हि किंचित्पुंसि प्रतिपदं कार्यमुच्य
ते यत्तृतीयादिष्वजादिषु विभक्तिषु भाषितपुंस्कस्यातिदिश्येत। नुम्प्रकृतस्तत्रापि किमन्यच्छक्यं विज्ञातुम्। अन्यदतो नुम्प्रतिषेधात्।
पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्वप्रतिषेधः॥ पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्वानां प्रतिषेधो वक्तव्यः।

निर्देशे प्रतिपत्ताचोपमाने भावाभावयोरन्यतरमवगत्य वाक्यशेषं कल्पयति। तत्र पुंसि नुमभावदर्शनान्नपुंसके पुंवदतिदेशान्नुम-
भावः प्रतीयते। तत्रेह न्यासे यथालक्ष्यं कचिद्भवतीत्यस्याध्याहारः। कचिन्न भवतीत्यस्य। कचिदुभयस्य। यथा स्यान्निवदतिदेशे। न 
याचवायोरित्यादौ स्वाश्रयलोपाभावः। न हि किंचिदिति। तस्माच्छसो नः पुंसीति नत्वातिदेशस्तृतीयादिषु पुंवद्भावातिदेशान्न पूर्वस
वर्णदीर्घाभावाच्चेह न संभवति। नुम्प्रकृत इति। अनेन प्रत्यासत्तिमाश्रयति। ॥

ह्रस्वत्वमप्रतिषिद्धमिति। तस्याप्रकृतत्वात्। अर्थातिदेशात्सिद्धमिति। यद्यपि प्रकरणमनपेक्ष्य व्याख्यास्याश्रयेणापि ह्रस्वाभावः सिध्यति तथापि संभवात्परिहारान्तरमाश्रितम्। यदि कार्यातिदेशः स्यात्तदा प्रकृतत्वाप्रकृतत्वलक्षणो भेदः स्यादर्थेत्वतिदिश्यमाने नायं भेदः नैवं विज्ञायत इति। यदा शब्देऽन्यपदार्थे कार्यातिदेशः स्यात्तदा प्रकृतस्यैव नुमः प्रतिषेधः स्यान्न ह्रस्वस्य। भाष्यते पुमानस्मिन्नर्थे इति। अर्थोऽन्यपदार्थे आश्रीयते स चार्थो नपुंसकलक्षणो विरोधान्नाश्रीयते। नहि नपुंसकेऽर्थे पुंसो भाषणमुपपद्यते। तस्माच्छब्दप्रवृत्तिनिमित्तलक्षणोऽर्थोऽन्यपदार्थत्वेनाश्रीयते। तद्योगाद्वाभिधेयं नपुंसकं तदपि भाषितपुंस्कमुच्यते। तस्यार्थस्य पुंस्त्वातिदेशाद्गुणवृद्धी अपि नुमभावे ह्रस्वे न भवतः। पुंसि तयोरप्यभावात्। अर्थस्य चापौरुषेयत्वादतिदेशासंभवात्तदतिदेशद्वारेणानेककार्यो

गुणः ग्रामण्ये ब्राह्मणकुलाय। गुणः। नाभावः ग्रामण्या ब्राह्मणकुलेन। नाभावः। नुट्। ग्रामण्यां ब्राह्मणकुलानाम्। नुट्। औ त्वम्। ग्रामण्यां ब्राह्मणकुले। ह्रस्वत्वमप्रतिषिद्धम्। ह्रस्वाश्रयाश्चैते विधयः प्राप्नुवन्ति। ह्रस्वाभावार्थं च। किं चानुम्प्रतिषेधार्थं च। कथं पुनरत्राप्रकृतस्य असंख्यत्वाद्धि तस्य ह्रस्वत्वस्य प्रतिषेधः शक्यो विज्ञातुम्। अर्थातिदेशात्सिद्धम्। नैवं विज्ञायते। भाष्यते पुमाननेनेति सोऽयं भाषितपुंस्कः भाषितपुंस्कस्य शब्दस्य पुंशब्दो भवतीति। कथं तर्हि भाष्यते पुमानस्मिन्नर्थे सोऽयं भाषितपुंस्कः भाषितपुंस्कस्यार्थस्य पुंवदर्थो भवतीति। तद्धितलुक्प्रतिषेधश्च। तद्धितलुकश्च प्रतिषेधो वक्तव्यः पीलुर्वृक्षः पीलु फलम् पीलुना पीलुने इति॥ न वा समानायामाकृतौ भाषितपुंस्कविज्ञानात्। न वा वक्तव्यम्। किं कारणम्। समानायामाकृतौ भाषितपुंस्कविज्ञानात्। समानायामाकृतौ यद्भाषितपुंस्कम्।

तिदेशादेवायं संपद्यते। नन्वयमप्यन्तरङ्गो ह्रस्वस्तथाप्यपवादविषयं प्रकल्प्योत्सर्गाणां प्रवर्तनान्नात्र प्रवर्तते। ह्रस्वाभावाच्च गुणादीनां निमित्ताभावादप्रवृत्तिः सिद्धा। तद्धितलुगिति। अर्थातिदेशस्यैव प्रयोजनान्तरं चोद्यमुखेनोपन्यस्यते। फले लुगित्यौरलो लुकि कृते पीलुशब्दो वृक्षाकृतौ पुल्लिङ्गः फलाकृतौ नपुंसकलिङ्ग इति पुंवद्भावान्नुमोऽप्रसङ्गः। नवेति। नन्वाकृतिरेवान्यपदार्थत्वेनाश्रिता। भाषितपुंस्कशब्दस्तु भाषितपुंस्कव्यपदेशो नैवाश्रितः। सत्यम्। साक्षाच्छब्दस्य भाषितपुंस्कव्यपदेशो नास्त्यभिधेयद्वारकस्तु केन निवार्यते। तत्र पीलुशब्दो वृक्षाकृतौ पुल्लिङ्गः फलाकृतौ नपुंसकलिङ्ग इति पुंवद्भावाप्रसङ्गः।

ईं च द्विवचने। पूर्वसवर्णेनेति। अक्षिभ्रौ इति स्थिते छान्दसात्पुंवद्भावात् स्त्रीभावे नुमि चासति प्रथमयोः पूर्वसवर्ण इत्यनेन नुमा व्यवहित 
त्वादिति। प्रथमयोः पूर्वसवर्ण इत्यत्राक इति वर्तते तेनाग्चोः स्थाने पूर्वसवर्णदीर्घ उच्यमानो नुम्व्यवधानेनास्तीत्यस्थिणी इति प्रा-
प्नोति परत्वाच्च नुम्प्राप्नोति। ईकारस्तु विधीयमानः परत्वान्नुमं बाधते तेन स्त्रीभावे कृते पूर्वसवर्णेनाक्षी इति सिध्यति। नुमि निवृत्ते
इति। अप्रवृत्तिरेव निवृत्तिः स्त्रीभावोऽपि पुंवद्भावान्न भवति। स्वरार्थ इति। उदात्तग्रहणानुवर्तनादीकार उदात्तः। नपुंसकस्वर
इति। नविषयस्यानिसन्तस्येत्याद्युदात्तत्वम्। ननु चेति। अव्युत्पत्तिपक्षे चोद्यते। व्युत्पत्तिपक्षे त्वव्रोर्निदिति नित्वादाद्युदात्त
आकृत्यन्तरे चैतद्भाषि तपुंस्कम्। किं वक्तव्यमेतत्। न हि। कथमनुच्यमानं गंस्यते। एतदप्यर्थनिर्देशात्सिद्धम्॥ ईं च द्विव
चने॥ किमुदाहरणम्। अक्षीते इन्द्र पिङ्गले। नैतदस्ति। पूर्वसवर्णेनाप्येतत्सिद्धम्। इदं तर्हि अक्षीभ्यां ते नासिकाभ्याम्। इ
दं चाप्युदाहरणम्। अक्षी ते इन्द्र पिङ्गले। ननु चोक्तं पूर्वसवर्णेनाप्येतत्सिद्धमिति। नुमा व्यवहितत्वात्पूर्वसवर्णो न प्रा-
प्नोति। छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः। मधोर्गृभ्णामि। मधोस्तृप्ता इवासते। इत्येवमर्थम्। पुंवद्भावेन नुमो निवृत्तिः।
नुमि निवृत्ते पूर्वसवर्णेनैव सिद्धम्। स्वरार्थस्तर्हीकारो वक्तव्यः। उदात्तस्वरो यथा स्यात्। नपुंसकस्वरो माभूत्। ननु च पुंव
द्भावातिदेशादेव स्वरो भविष्यति। अवाच्यः पुंवद्भावातिदेशस्तत्राश्रयितुम्। इह हि दोषः स्यात्। मध्वस्मिन्न स्ति। मधुमी
स इति। स तर्हि पुंवद्भावो वक्तव्यः। न वक्तव्यः। प्रकृतं पुंवदिति वर्तते। नाभ्यस्ताच्छतुः॥ कस्यायं प्रतिषेधः। नुम इत्या
ह। तत्र नुमो ग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क प्रकृतम्। इदितो नुम्धातोरिति। तद्वै अनेकग्रहणेन व्य
वच्छिन्नमशक्यमनुवर्तयितुम्।

त्वेन भाव्यम्। मधुमीस इति। मत्वर्थे मास तन्वोर्मधोर्ञ्चेति यत उत्पन्नस्य लुगकारेकाररेफादेशाश्च वक्तव्या इति लुकि कृते मासे पुंसि म
धुशब्दो वर्तते इत्याद्युदात्तत्वं न स्यात्। तस्माद्यस्यान्यत्र नपुंसकत्वं दृष्टं तस्यास त्यपि नपुंसकत्व आद्युदात्तत्वमिष्यत इति पुंवद्भावेऽपि स्वरा 
निवर्तनात्स्वरार्थ ईकारो विधेयः। स तर्हीति। मधोर्गृह्णीत्येवमाद्यर्थः। प्रकृतमिति॥ वाक्यभेदे न संबन्धः क्रियते। छन्दसि नपुंसकं पुं 
वदित्येकं वाक्यम्। अस्थ्यादीनां छन्दसि द्विवचन ईकारो भवतीति द्वितीयं वाक्यम्। नाभ्यस्ताच्छतुः॥ कस्यायमिति॥ आच्छीनद्योर्नुमि
ति नुम्ग्रहणाद्व्यवहितस्यानुवृत्तिर्नाम्निनानचानन्तरः प्रतिषेधार्ह इति प्रश्नः। ॥

एवं तर्हीति। उगिदचां सर्वनामस्थाने धातोरित्यतः सर्वनामस्थानं निषेध्यलक्षणार्थं विज्ञायते। सर्वनामस्थाने यन्नुम्प्राप्नोति तदस्य स्ताच्छतुर्न भवतीति नुम एव प्रतिषेधः संपद्यते। बहुतरकेणेति। नुमागमश्च तुर्भिर्योगैर्विच्छिन्नः। सर्वनामस्थानं तु पञ्चभिरिति प्रकर्षप्रत्ययनिर्देशः। आच्छीनद्योर्नुम्। इह कस्मादिति। सर्वत्र एवावर्णस्य निवृत्त्याभाव्यम्। क्वचिल्लुका क्वचिच्छ्लुना। क्वचिदेकादेशेन। क्वचित्तु श्नाभ्यस्तयोरात इति लोपेन। तत्रावश्यंभूतपूर्वगतिराश्रयितव्या। अवर्णनिवृत्तिश्चास्यस्वानुमागमविधानात्पूर्वं प्रतिबन्धादप्रवृत्तिस्तत्रश्चात्रापि प्रसङ्ग इति भावः। लोपे कृत इति। नित्यत्वादन्तरङ्गत्वाच्च। पूर्वोक्तेनैवाभिप्रायेण चोदय

एवं तर्हि सर्वनामस्थानं इति वर्तते। सर्वनामस्थाने यत्प्राप्नोति तस्य प्रतिषेधः। तद्वै बहुतरकेण ग्रहणेन व्यवच्छिन्नमशक्यमनुवर्तयितुम्। अथेदानीं व्यवहितमपि शक्यतेऽनुवर्तयितुम्। नुमेवानुवर्त्य इहार्थमुत्तरार्थं चाइह चैव प्रतिषेधः सिद्धो भवति। इह च आच्छीनद्योर्नुमिति नुम्ग्रहणं न कर्तव्यं भवति॥ आच्छीनद्योर्नुम्॥ इह कस्मान्न भवति। अदती घ्नती जुनती पुनतीति। लोपे कृते चावर्णाभावात्। किं तर्ह्यस्मिन्योग उदाहरणम्। याती यान्ती। अत्राप्येकादेशे व्यवयवर्गाभावान्न प्राप्नोति। अन्तादिवद्भावेन व्यपवर्गः। उभयत आश्रयेनान्तादिवद्भावः। नोभयत आश्रयः करिष्यते। नैवं विज्ञायते अवर्णान्ताच्छतुर्नुम्भवतीति। कथं तर्हि। अवर्णान्नुम्भवति। तच्चेदवर्णं शतुरनन्तरमिति॥ शप्श्यनोर्नित्यम्॥ नित्यग्रहणं किमर्थम्। विभाषा मा भूदिति। नैतदस्ति प्रयोजनम्। सिद्धोऽत्र पूर्वेणैवा तत्रारम्भसामर्थ्यान्नित्यो विधिर्भविष्यति। तदेतन्नित्यग्रहणं सान्यासिकं तिष्ठतु तावत्। सावनडुहः॥ अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वात्। अनडुहः सावाम्प्रतिषेधः प्राप्नोति। किं कारणम्। नुमोऽनवकाशत्वात्। अनवकाशो नुम्। आमं बाधते।

ति। किं तर्हीति। इतरः सांप्रतिकमवर्णान्तं दर्शयितुमाह यान्तीति। नैवं विज्ञायत इति। एवं विज्ञायमाने वर्णान्तता चोभयमाश्रितं स्यात्। अवर्णान्नुम् भवतीति। अवर्णात्पर इत्यर्थः। अत्र च यवव्यतिरिक्तश्चावर्णो गृह्यते। आदित्युपादानसामर्थ्यात्। तच्चेदवर्णमिति। अत्र च यवस्तकारः शात् शब्देनोच्यते। न ह्यन्यथा एकादेशे कृते शतुरनन्तरमवर्णं भवति। उभयत आश्रये च नान्तादिवदित्युक्तम्। तस्माच्छत्र च यवस्तकारः शात् शब्देनोच्यते। अत्र वा यपकारव्यतिरिक्तं चावर्णमेकादेशात्मकमाश्रीयते इति न कश्चिद्दोषः। सावनडुहः ॥ आमागमः सर्वनामस्थानमात्रे विधीयमानः सोऽन्यत्र सावकाशो निरवकाशेन नुमा बाध्येतेति मत्वाह॥ अनडुहः साविति। ॥

अवर्णोपधस्येति।नचामाविनावर्णोपधत्वसंभवदृतिनिमित्तमेवनुमआमिति बाध्यबाधक भावाभावः॥अनडुहियावन्तीति।अ
नडुहोकारान्तत्वासंभवादनडुहावर्णोविशेष्यतेनत्ववर्णेनानडुच्छब्दस्ततः सर्वावर्णानांनुमू प्रसङ्गः।यद्येवंसत्यामप्यादि
त्यस्यानुवृत्तौयदेवसन्निहितमवर्णतस्यैवनुमस्यात्तथाचनुमाआमूबाध्येतानैषदोषः आगमिभेदात्।आमनडु होनुम्त्ववर्ण
स्यतस्मात्सर्वावर्णानांनुम्प्रसङ्ग एवदोषः।मिदचोन्त्यादिति।मित्त्वलिङ्गाच्चमि त्परिभाषोपत्तिष्ठेत्तदुपस्थानादुकारात्परोनुम्प्रस
क्तआ दित्यधिकारादवर्णादन्त्यात्परः क्रियते।नचाम्यकृतेवर्णोन्त्योभवतीतिसामर्थ्यादामिकृतेनुम्विधीयते।अथवोकारात्य

नवावर्णोपधस्यनुम्वचनात्।नवाएषदोषः।किंकारणम्।अवर्णोपधस्यनुम्वचनात्।अवर्णोपधस्यनुमंवक्ष्यामि
।तदवर्णग्रहणंकर्तव्यम्। नकर्तव्यम्।प्रकृतमनुवर्तते।कप्रकृतम्। आच्छीनद्योर्नुमिति। यदितदनुवर्तते।अ
नडुहियावन्त्यवर्णानिसर्वेभ्यःपरोनुम्प्राप्नोति।मिदचोन्त्यात्परइत्यनेनयस्त्वन्त्यमवर्ण तस्मात्परोभ विष्यति
।पुनःप्रसङ्ग विज्ञानाद्वासिद्धम्।अथवापुनःप्रसङ्गान्नुमिकृतेआम्भविष्यति।यथाआत्वादिषुद्विर्वचनम्।
तद्यथाजग्ले मम्ले ईजतुरीजुरिति।आत्वादिषुकृतेषुपुनःप्रसङ्गाद्द्विर्वचनंभवति।एवमत्रापिनुमिकृ
तेआम्भविष्यति।नैषयुक्तःपरिहारः।विप्रतिषेधेपुनःप्रसङ्गः।विप्रतिषेधश्चद्वयोःसावकाशयोर्भवति।इहपु
नरनवकाशोनुमामंबाधते।एवंतर्हिवृत्तान्तादेषपरिहारःप्रस्थितः।कस्माद्वृत्तान्तात्।इदमयंचोद्योभवति।अनडु
हःसावाम्प्रतिषेधोनुमोनवकाशत्वादितितस्यपरिहारोनवावर्णोपधस्यनुम्वचनादिति।ततो।यंचोद्योभवति।यत्र
तर्ह्यवर्णप्रकरणंनास्तितत्रतेआमानुमोबाधनंप्राप्नोति।बहूनडुंहिब्राह्मणकुलानि।ततउत्तरकालमिदंपठितंपु
नःप्रसङ्ग विज्ञानाद्वासिद्धमिति॥दिवऔत्॥दिवऔत्वेधातोःप्रतिषेधः।दिवऔत्वेधातोःप्रतिषेधोवक्तव्यः।

दएवविधीयते।तत्रादित्यधिकारादयमर्थोभवति।यथावर्णात्परोनुम्भवतितथाकर्तव्यमेवंचावर्णात्परो भवति।यदिकृतेनुम्यामुक्रि
यते।एवंचसत्यादित्याधिकारोनुगृहीतोभवति।परिभाषाचनत्यक्ताभवति॥पुनःप्रसङ्ग विज्ञानाद्वेति।चार्थेवाशब्दः।बहूनडुंहीति
।परत्वादामिकृतेपुनःप्रसङ्ग विज्ञानान्नपुंसकस्यझलचइतिनुमुक्रियतेइतिवाक्यार्थः।भाष्यकारस्तुन्यायत्वात्दनार्थेविक- एमः
ल्पार्थेवाशब्दंव्याख्यायदूषयित्वासमुच्चयार्थमेवव्याचष्टे।वृत्तान्तादिति।प्रसङ्गेवृत्तान्तश्चोद्यप्रसङ्गादित्यर्थः।अथवावृत्तोऽतिक्रा ७५
न्तोयः प्रबन्धश्चोद्यसमाधानलक्षणः।तदन्तेव्य वस्थितंपचोद्यंतदपचाराद्वृत्तान्तशब्दवाच्यंतस्मादित्यर्थः॥दिवऔत्॥दिवऔत्व
इति।विशेषानुपादानाद्धातोरपिप्राप्नोति। ॥

अक्षद्यूरिति। कुठि कृते एकदेशविकृतस्यानन्यत्वादोत्वप्रसङ्गः॥ अननुबन्धकग्रहण इति। अव्युत्पन्नं दिविति प्रातिपदिकमननुबन्धकम्। व्युत्पत्तिपक्षेप्यवयवानां प्रत्ययादीनां सानुबन्धकत्वं न प्रातिपदिकस्यासंबन्धमिति। उगिदचामित्यनेन। दिव ओदित्यत्र धातोरि-ति वर्तते। उगिदचामिति निवृत्तम्॥ इतोऽत्सर्वनामस्थाने॥ इतो द्वचनमिति। क्वचिदेकादेशविधानात्क्वचिद्दीर्घविधानाच्च ह्रस्वस्याप्यवर्णेन न भाव्यमित्याकार एव प्रकृत इतो विधेय इत्यर्थः। षपूर्वार्थमिति। वा षपूर्वस्य निगम इति दीर्घविकल्पेन रूपद्वयसिद्धिरकारविधौ त्वेकमेव रूपं स्याद् दीर्घविकल्पस्तु तक्षणं तक्षाणमित्याद्यर्थं स्यात्॥ पुंसोऽसुङ्॥ असुङीति॥ पातेर्डुम्सुन्नित्याद्युदात्तस्य पुंसः सकारस्याविद्य

अक्षद्यूरिति। अधात्वधिकारात्सिद्धम्। अधातोरिति वर्तते क्व। प्रकृतम्। उगिदचां सर्वनामस्थाने धातोरिति। अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषः अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषो भवति। काष्ठतक्षि कूटतक्षि नपुंसकस्य झलचः। अधातोरिति प्रतिषेधः प्राप्नोति। उक्तं वा। किमुक्तम्। अननुबन्धकग्रहणे। सानुबन्धकस्येति। अथवा संबन्धमनुवर्तिष्यते॥ इतोऽत्सर्वनामस्थाने॥ इतो द्वचनमनर्थकमाकारप्रकरणात्। इतो द्वचनमनर्थकम्। किं कारणम्। आकारप्रकरणात्। आदिति वर्तते। षपूर्वार्थं तु। षपूर्वार्थं तर्हीद्वक्तव्यः। ऋभुक्षणमिन्द्रम्। ऋभुक्षाणमिन्द्रम्॥ पुंसोऽसुङ्॥ असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात्। असुङ्युपदेशिवद्भावो वक्तव्यः। उपदेशावस्थायामेवासुङ् भवतीति वक्तव्यम्। किं प्रयोजनम्। स्वरसिद्ध्यर्थम्। उपदेशावस्थायामसुङि कृते इष्टः स्वरो यथा स्यात्। परमपुमानिति। अक्रियमाणे ह्युपदेशिवद्भावे समासान्तोदात्तत्वे ऽसुङ् आन्तर्यतः अस्वरकस्यास्वरकः स्यात्। किं पुनः कारणं समासान्तोदात्तत्वं तावद्भवति। न पुनरसुङ्। न पुनरसुङा भवितव्यम्। बहिरङ्गलक्षणत्वात्। बहिरङ्गलक्षणो ऽसुङ् अन्तरङ्गः स्वरः। असिद्धं बहिरङ्गमन्तरङ्गे।

मानोदात्तत्वादनुदात्तस्य स्थाने ऽसुङि क्रियमाणे आन्तरतम्यादनुदात्तं पदमेकवर्जमिति वचनाद्वा अनुदात्त एव भवतीति पुमानित्यादौ दोषाभावः। परमपुमानित्यत्र त्वन्तरङ्गत्वात्समासान्तोदात्तत्वे कृते सर्वनामस्थाने उत्पन्ने ऽसुङि क्रियमाणे ऽनुदात्तः प्राप्नोति उदात्त इष्यते ननु चोकारस्य कृतमपि समासान्तोदात्तत्वमसुङि कृते ऽनन्यत्वान्न व्यवतिष्ठते नैतदस्ति। अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्यासुङो ऽसिद्धत्वान्निर्वर्तितस्य वा निवर्तनादुपदेशिवद्वचनात्तु पूर्वमसुङ्भवति पश्चात्समासान्तोदात्तत्वम्। अस्वरकः स्यादिति। प्रवृत्तिकाले स्वरविशेषस्यानुपादानादनभिमतानुदात्तप्रसङ्गाच्चास्वरक इत्युच्यते। न त्वस्वरकस्याच उच्चारणं संभवति। अथवोदात्तत्वाभावादस्वरक इत्युच्यते।

 एवमपीति। यस्मादुदात्तनिपाने दोषस्तस्मात्तत्परित्यागेनेत्यर्थः। प्रकृतिस्वरमिति। पुमानित्यादौ आद्युदात्तत्वमित्यर्थः॥ प्रकृतिस्वरस्य- 
कोवकाशइति चेत्पर्यायः स्यात्॥ गोतो णित्॥ गाङ्कुटादिसूत्रे यावन्तः पक्षा उक्तास्ते सर्वे इहापि संभवन्ति। तत्र णकारस्येतः सर्वनामस्थाने अ-
भावाद्भावेवा तदनुवादे प्रयोजनाभावात्सित्त्वव्यपदेशाभावः। संज्ञाकरणेऽपि ञ्णिद्ग्रहणे संज्ञिनोऽसंप्रत्ययः शब्दभेदाद्भावनापक्षेणका-
र आदेशः प्राप्नोति। ण्वुलादि वाप्रसिद्धणित्त्वं प्राप्नोति। नद्वदतिदेशस्तु निर्दोषत्वादाश्रीयते। भाष्ये तु भावनापक्षएवाशङ्क्य निराकृतः परस्ता-

त्तर्हि उपदेशिवद्भावो वक्तव्यो न वक्तव्यः। असुङ् आद्युदात्तनिपातनं करिष्यते। स निपातनः स्वरः समासस्वरस्य बा-
धको भविष्यति। एवमप्युपदेशिवद्भावो वक्तव्यः। यथैव हि निपातनस्वरः समासस्वरं बाधते। एवं प्रकृतिस्वरमपि
बाधेत॥ पुमान्॥ तस्मात्सुष्ठूच्यते। असुङि उपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादिति॥ गोतो णित्
॥ किमिदं गोतः परस्य सर्वनामस्थानस्य णित्त्वमुच्यते। आहोस्वित्सर्वनामस्थाने परतो णित्कार्यमतिदिश्यते॥
कश्चात्र विशेषः। गोतः सर्वनामस्थाने णित्कार्यातिदेशः। गोतः सर्वनामस्थाने णित्कार्यमतिदिश्यते। सर्वनाम-
स्थाने णिद्वचने ह्यसंप्रत्ययः। षष्ठ्यनिर्देशात्सर्वनामस्थानस्य णिद्वचने ह्यसंप्रत्ययः स्यात्। किं कारणम्। षष्ठ्यनि-
र्देशात्षष्ठीनिर्दिष्टस्यादेश उच्यते। न चात्र षष्ठीं पश्यामः। एवं तर्हि वतिनिर्देशोऽयं गोतो णिद्वद्भवतीति। स तर्हि वति-
निर्देशः कर्तव्यः। न ह्यन्तरेण वतिमतिदेशो गम्यते। अन्तरेणापि वतिमतिदेशो गम्यते। तद्यथा। एष ब्रह्मदत्तः अब्र-
ह्मदत्तं ब्रह्मदत्त इत्याह। ते मन्यामहे ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यणितं णिदित्याह णिद्वदिति गम्यते। अथ
वा पुनरस्तु गोतः परस्य सर्वनामस्थानस्य णित्त्वम्। ननु चोक्तं सर्वनामस्थाने णिद्वचने ह्यसंप्रत्ययः षष्ठ्यनिर्देशादिति। नै-
ष दोषः। गोत इत्येषा पञ्चमी सर्वनामस्थान इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्येति।

त्स्थापितस्य। किमिदमिति। एकइत्संज्ञको यस्य तण्णित् तस्य भावो णित्त्वम्। तेनायमर्थः। अणितः सर्वनामस्थानस्य स्थाने णित्सर्वनामस्थानमादे- 
शो भवति ण्वुलादयस्तु तदर्थाभिधानेऽसमर्थत्वान्न भवन्ति। एतदुक्त्या पाश्रये गाङ्कुटादिसूत्रेऽपि भावनापक्षे न कश्चिद्दोषः। गोत 
इत्येषेति। भावनापक्षे गोत इति पञ्चमी। नद्वदति—देशपक्षे तु षष्ठी॥ न परकरणमिति। स्थानिवत्त्वनिषेधादानर्थक्यमिति प्रश्नः॥ ॥

चित्रगुरिति। तपरस्तत्कालस्येत्यत्राणितिनानुवर्तते इति अनणोपि तत्कालस्य ग्रहणम्। इतरथा हीति॥ यदि स्थानिवत्त्वनिषेधो नाश्रीय
तेतदा सत्यपि तपरकरणे संबुद्धौ जसि च गुणे कृते स्थानिवत्त्वात्तत्कालत्वाच्चाणित्वं स्यादित्यर्थः। प्रतिषिद्धे तु स्थानिवत्त्वे गुणे कृते
गोरूपस्य लाक्षणिकत्वादणित्वाप्रसङ्गः॥ अव्युत्पत्तिपक्षाश्रयेणैतदुच्यते। व्युत्पत्तिपक्षे तु सर्व एव लाक्षणिकः। नहीदानीमिति। स्था
प्रा
श्रयाप्राप्तिः सा लक्षणप्रतिपदोक्तपरिभाषावशान्मा भूत्। स्थानिवत्त्वनिमित्ता तु स्यादेव प्राप्तिः। न हि सा पूर्वोक्तया परिभाषया निवार्य
ते। स्थानिवत्त्वस्य निर्विषयत्वप्रसङ्गात्॥ तृज्वत्क्रोष्टुः॥ अथात्र विभक्ताविति। तृज्वत्क्रोष्टुरित्यत्र सर्वनामस्थानाधिकाराद्धि भक्त्यधिका
अथ तपरकरणं किमर्थम्। इह मा भूत्। चित्रगुः शबलगुरिति। नैतदस्ति। ह्रस्वत्वे कृते नेन भविष्यति। स्थानिवद्भावात्प्राप्नोति।
अत उत्तरं पठति। तपरकरणमनर्थकं स्थानिवत्प्रतिषेधात्। तपरकरणमनर्थकम्। किं कारणम्। स्थानिवत्प्रतिषेधात्।
प्रतिषिध्यतेऽत्र स्थानिवद्भावः। गोः पूर्वत्वणित्वात्स्वरेषु स्थानिवन्न भवतीति। स चावश्यं प्रतिषेध आश्रयितव्यः। इतरथा हि सं
बुद्धिजसोः प्रतिषेधः॥ यो हि मन्यते तपरकरणसामर्थ्यादत्र न भविष्यतीति संबुद्धिजसोस्तेन प्रतिषेधो वक्तव्यः स्यात्। हे चि
त्रगो चित्रगव इति। अथेदानीं सत्यपि स्थानिवत्प्रतिषेधे गुणे कृते कस्मादेवात्र न भविष्यति। लक्षणप्रतिपदोक्तयोः प्र
तिपदोक्तस्यैवेति। ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परिभाषया शक्यमुपस्थातुम्। नेत्याह॥ नहीदानीं कश्चिदपि
स्थानिवत्स्यात्॥ तृज्वत्क्रोष्टुः॥ स्त्रियां च॥ अथात्र विभक्ताविति अनुवर्तते उताहो न। किं चातः। तृज्वत् स्त्रियां विभक्तौ चेत्क्रो
ष्ट्री भक्तिर्न सिध्यति। तृज्वत् स्त्रियां विभक्तौ चेत्क्रोष्ट्री भक्तिरिति न सिध्यति। एवं तर्हीकार एव तृज्वद्भावं वक्ष्यामि। तदीकार
ग्रहणं कर्तव्यम्। न कर्तव्यम्। क्रियते न्यास एव।

स्य सनदोषोन प्रयोजनम्। विभाषा तृतीयादिष्वचीत्यत्रापि अत्यादिशब्दस्य व्यवस्थावाचित्वाद्धि भक्तय एव गृह्यन्त इति तत्रापि न विचार इति स्त्रि
यां चेत्यत्रैवायं विचारः क्रियते इह तो ऽधिकाराणां प्रवृत्तिनिवृत्तिभावात्। क्रोष्ट्री भक्तिरिति। क्रोष्ट्री भक्तिर्यस्येति बहुव्रीहिः। भक्तिशब्दस्य
स्त्रियादिषु पाठात्पुंवद्भावाभावः। अत्रान्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति लुकि कृते विभक्त्यभावान्न लुमताङ्गस्येति प्रत्ययलक्ष
णप्रतिषेधाच्च तृज्वद्भावो न प्राप्नोतीति तदभावादृकारान्तत्वनिमित्तो ङीबपि न प्राप्नोति। एवं तर्हीति। विभक्तिर्निमित्तत्वेन नाश्रीयते किं तर्हि ईकारः॥

स्त्रीई स्त्रीति। स्त्रियाई स्त्रीतस्य योनकईकारइत्यर्थः। षष्ठीसमासः। अर्थगतं च स्त्रीत्वं ईकारे आरोप्य नदीसंज्ञानिमित्तावामाटोक्ति येतेगौरादिपाठादिति। पृथिवीक्रोष्टुपिप्पल्यादयस्त्वेतिष्ठेदाध्यायिनः पठन्ति। नहि किंचिदिति। संहिताध्यायिनो न पठन्ति। सर्वात्मना पाठं प्रतिपादयितुमेतदुच्यते। ङीपो ङीषो वेति। उदात्तयणो हल्पूर्वादिति ङीपउदात्तत्वविधानात् ङीनपीति। ततश्चाद्युदात्तत्वप्रसङ्गः। ननु ईकारे तृज्वद्भावविधानात् सतिशिष्टश्चित्स्वरो नित्स्वरं बाधिष्यते नेन तश्चोदात्तयणो हल्पूर्वादित्युदात्तविधानान्नास्ति विशेषः। नैतदस्ति। क्रोष्टुशब्द आद्युदात्त एव। न तत्र ङीनिकृते प्रयोजनाभावात् कृते तृज्वद्भावे नित्स्वरो न प्रवर्तत इति पूर्वं तृज्वद्भावः परत्वाद्वा नत्र कृते नित्स्वरः सतिशिष्टः चित्स्वरं बाधेत। यदि तु ज्ञापकेनापि प्यस्याद्यन्तर्भावः क्रोष्टुशब्दस्यानुमीयते तदा न कश्चिद्दोषः। अपूर्वस्य त्वीका

प्रश्लिष्टनिर्देशोयं स्त्रीई स्त्री स्त्रियामिति। ईकारे तन्निमित्तः सः। ईकारे चेत् न तत्। किं कारणम्। तन्निमित्तसः। तृज्वद्भावनिमित्तः स ईकारः। नाकृते तृज्वद्भावे ईकारः प्राप्नोति। किं कारणम्। ऋन्नेभ्यो ङीबित्युच्यते। ईकारे च तृज्वद्भावः। तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च न प्रकल्पन्ते। एवं तर्हि गौरादिपाठादीकारो भविष्यति। गौरादिषु न पठ्यते। नहि किंचित्तु न्वन्तं गौरादिषु पठ्यते। एवं तर्हि एतज्ज्ञापयत्याचार्यः भवत्यत्र ईकार इति यदयमीकारे तृज्वद्भावं शास्ति। तेनैव भावनं चेत्तृस्यादनिष्टोपि प्रसज्यते। यद्यपि नास्ति विशेषो ङीपो वा ङीषो वा ङीन पि तु प्राप्नोति। इह च न प्राप्नोति।

रस्यानुमाश्रित्य श्लोकवार्तिककारेण दोष उपात्तः ४ शार्ङ्गरवाद्यन्तर्भावानुमानमपि स्यादिति तदाशयः। पञ्चभिरिति। तद्धितार्थेति समासः। आर्हादिति ठक्। उत्पन्नस्याध्यर्द्धपूर्वेति लुक्। लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुकि कृते न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधादीकारनिमित्तस्तृज्वद्भावो न प्राप्नोति अन्तरङ्गाणां च विधीनां लुका बाधनात् पूर्वमेव तृज्वद्भावो न लभ्यते तत्राद्येन सर्वनामस्थाने तृज्वद्भावोन्त्येन तु जादिषु तृतीयादिषु विकल्पेनेति हलादौ मध्यमेनाप्राप्तिरुच्यते। ॥

पञ्चक्रोष्टृभिरिति। केचिदाहुः। भस्याढे तद्धिते कृत्वसोश्चेति वा प्राप्तः पुंवद्भावो जातेश्चेति निषिध्यते। तदयुक्तं। भत्वाभावाच्छस्तसहचरितस्य ठको ग्रहणाद्व्यतिरेक पुंवद्भावस्य नास्ति। जातेश्चेति प्रतिषेध औपसंख्यानिकस्य पुंवद्भावस्य नास्त्येव यथा हस्तिनीनां समूहो हास्तिकमिति। अङ्गसंज्ञा चेति। लब्धाङ्गसंज्ञकस्य यत्कार्यं प्रत्ययलक्षणं तन्न लुमताङ्गस्येत्यनेन निषिध्यते। न चाङ्गसंज्ञा अङ्गस्य कार्यमिति प्रत्ययलक्षणेन भवत्येव॥ तत्र स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य लब्धाङ्गसंज्ञकस्य तृज्वद्भावे सति ङीप्प्रत्ययः कार्यः कार्यकालत्वे तु संज्ञापरिभाषस्याङ्गम् आश्रिते प्रत्यये प्याश्रितो भवति यथा वव्रश्चेति न तदाङ्गस्येत्येन तदत्र नापेक्ष्यम्। किं पुनरिति। शास्त्रस्य शास्त्रं

पञ्चभिः क्रोष्ट्रीभिः क्रीतैः रथैः पञ्चक्रोष्टृभी रथैरिति। एवं तर्हि न चापरं निमित्तं संज्ञा च प्रत्ययलक्षणम्। न चापरं निमित्तमाश्रीयते अस्मिन्परतः क्रोष्टुस्तृज्वद्भवतीति। किं तर्हि। अङ्गस्य क्रोष्टुस्तृज्वद्भवति। अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन। किं पुनः अयं शास्त्रातिदेशः तृचो यच्छास्त्रं तदतिदिश्यते आहोस्विद्रूपातिदेशः तृचो यद्रूपं तदतिदिश्यत इति। कश्चात्र विशेषः। तृज्वदिति शास्त्रातिदेशश्चेद्यथाचिरि॥ तृज्वदिति शास्त्रातिदेशश्चेद्यथा चिरि तद्वत्प्राप्नोति। कथं चिरि। उक्तं तत्राङ्गस्येति तु प्रकरणादङ्गशास्त्रातिदेशात्सिद्धमिति आङ्गं यत्कार्यं तदतिदिश्यते। एवमिहाप्यनङ्गुणदीर्घत्वान्यतिदिश्यन्ते। रपरत्वमनतिदिष्टम्। तत्र को दोषः। तत्र रपरवचनम्। तत्र रपरत्वं न सिध्यतीति तद्वक्तव्यम्। नैष दोषः। गुणेऽतिदिष्टे रपरत्वमपि अतिदिष्टं भवति॥ कथम्। कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम्। ऋतो ङिसर्वनामस्थानयोर्गुणो भवति। उपस्थितमिदं भवति उरण्रपर इति। एवं तर्हि अयमन्यो दोषो जायते।

प्रत्यासन्नमिति प्रत्यासत्त्या शास्त्रातिदेशः प्राप्नोति॥ प्राधान्यात्तु रूपातिदेशप्रसङ्गः रूपार्थत्वात् शास्त्रप्रवृत्तेः। कार्यातिदेशस्तु शास्त्रातिदेशादभिन्नत्वान्न पृथगुपन्यस्तः। तृज्वदित्यादि। रूपे निदिश्यमाने सूत्रसन्निवेशस्यानपेक्षणात् प्रकरणकृतव्यवस्थाभावः। शास्त्रातिदेशे तु प्रत्यासत्त्याङ्गप्रकरणसन्निकृष्टस्यैव शास्त्रस्यातिदेशः स्यात्। न विप्रकृष्टस्य यथा चि एवद्भावेन च्छ्वादीन्येव भवन्ति न ह निणिड्नादेशाः। रपरत्वमिति। यथोद्देशपक्षे प्रकरणान्तरे संनिवेशादिति भावः। कार्यकालमिति। प्रधानदेशत्वाद्गुणानामङ्गाधिकारे पर परिभाषायाः सन्निधानादित्यर्थः॥

ए वर

आहत्येति। उभयोर्बाधो मा भूदित्यर्थः। शास्त्रशब्दे याशासनक्रियाशास्त्रकरणिका तदपेक्ष्य पौर्वकाल्याश्रयः क्त्वाप्रत्ययः तत्र यदि तच्छब्दवच्छास्त्रमतिदिश्यते न तदाहत्य यच्छास्त्रमिति पक्षोऽयमकारणवत्तच्छब्दे विवक्ष्यते चकारः स्वरार्थस्तकारस्त्वप्रसिद्धाशंकानिवृत्त्यर्थः। तृज्वदित्युच्यमानेऽप्रसिद्धातिदेशः संभाव्येत तृच्छब्दनिबन्धनसमासान्तशास्त्रातिदेशविषयः संदेहो वा स्यात्तृन्तस्मात् तृकारमात्रप्रतिबद्धशास्त्रातिदेशे नाहत्येष पक्ष उद्भवति। अनङ्गुणारपरत्वानीति। ऋदुशनस्पुरुदंसोनेहसां चेत्यनङ्। ऋतो ङिसर्वनामस्थानयोरिति गुणः। उरण् रपर इति रपरत्वम्। दीर्घत्वमनतिदिष्टमिति। नहि तृन्तद्वत्युच्यते किं तर्हि अपूत्तृतच् इति तच्छब्दोच्चारणेनानवयवसमुदाययोर्युगपद्विवक्षा। यतस्तृच्प्रतिबद्धतकारप्रतिबद्धं च शास्त्रमतिदिश्यते। न चाकृतेष्विति। अचो दीर्घेण भाव्यम्। न च क्रोष्टुशब्दस्योकारान्तस्याजुपधा संभवति। तत्र क्रोष्टेत्यत्रानङि कृतेऽजुपधा भवति। क्रोष्टारौ इत्यादौ तु गुण

आहत्य तच्चो यच्छास्त्रं तदतिदिश्यते। अनाहत्य वेति। किं चातः। यद्याहत्य दीर्घत्वमतिदिष्टम्। अनङ्गुणारपरत्वान्यनतिदिष्टानि। अथानाहत्यानङ्गुणारपरत्वान्यनतिदिष्टानि। दीर्घत्वमनतिदिष्टम्। अस्त्वाहत्य। ननु चोक्तं दीर्घत्वमतिदिष्टमनङ्गुणारपरत्वान्यनतिदिष्टानीति। नैष दोषः। दीर्घत्वेऽतिदिष्टेऽनङ्गुणारपरत्वान्यनतिदिष्टानि भवन्ति। कथमुपधायामिति वर्तते। न चाकृतेष्वेतेषु दीर्घत्वभाविन्युपधा भवति। कुतो नु खल्वेतत्। एतेषु विधिषु कृतेषु या उपधा तस्याः उपधायाः दीर्घत्वं भविष्यति। न पुनः क्रोष्टुर्योऽन्तरतमो गुणस्तस्मिन्कृतेऽवादेशे च या उपधा तस्याः दीर्घत्वं भविष्यति नैकमुदाहरणं योगारम्भं प्रयोजयति। तत्र तृज्वद्वचनसामर्थ्यादेतेषु विधिषु कृतेषु या उपधा तस्या दीर्घत्वं भविष्यति।

रपरत्वयोः कृतयोः। न पुनरिति। क्रोष्टुशब्दस्य जसि चेत्युकारस्य गुणेऽस्यैव तस्यावादेशे कृतेऽकारस्य दीर्घः स्यात्। ततश्च क्रोष्टावइति स्यात्। नैकमिति। अन्यथा दीर्घविधावेव क्रोष्टुशब्दं निर्दिशेत्। ननु दीर्घविधौ क्रोष्टुशब्दे उपादीयमाने स्त्रियां च विभाषा तृतीयादिष्वचीत्येवमर्थं तृज्वत्क्रोष्टुरिति वक्तव्यमिति गौरवं स्यात्। नैष दोषः। अचिरकृतदिति रादेशप्रकृते क्रोष्टोः स्त्रियां च विभाषा तृतीयादिष्वचीत्येवं रादेशविधानात्क्रोष्टुरवाभावात्। ननु रादेशे क्रोष्टुः क्रोष्ट्रीति न सिद्ध्यति। नाप्युदात्तयणो हल्पूर्वादिति स्वरः। एवं तर्हि हिः क्रोष्टुग्रहणं योगविभागाद्बहुषु॥ तदुक्तं। अक्षराधिक्यादपि योग —— विभागो गरीयानिति। तदेवं तृज्वद्भावविधानसामर्थ्याद्यादृशी च उपधा यादृशान्यनिमित्ता तादृश्या एव नादृश्यान्यनिमित्ता याः क्रोष्टुशब्दस्योपधाया दीर्घो भवतीत्यनङ्गुणारपरत्वेषु कृतेषु दीर्घो भवति।

अस्मिन्परिहारे पूर्वोक्तगौरवप्रसङ्गात् असमाधस्सन्परिहारान्तरमाह। अथवेति। तृज्वदिति समुदाय एवाश्रीयते तत्र व्याप्तिन्यायाश्रयाद्यत्किंचित्तृचो दृष्टं शास्त्रं तत्सर्वमतिदिश्यते। एवं भूयोलक्ष्यं लक्षणं चानुगृहीतं भवति। नन्वङ्गप्रकरणोपात्त एव शास्त्रेऽतिदिश्यमाने क्रोष्ट्रीति यणादेशशास्त्रस्यानङ्गत्वादतिदेशेन स्यात्। एवं तर्हि स्त्रियामङ्गशास्त्रातिदेशासंभवादनङ्गस्याप्यतिदेशः विभाषा तृतीयादिष्वचीत्यत्र तर्हि क्रोष्ट्रीत्यत्र गुणविधानातिदेशस्य चरितार्थत्वात् क्रोष्टुः क्रोष्ट्रेति यणादेशप्रसङ्गः क्रोष्टुरित्यत्र ऋत उदिति शास्त्रं न प्रवर्तेत। तत्रापि तृतीयादिग्रहणसामर्थ्यादनङ्गस्याप्यतिदेशोऽन्यथा विभाषाङ्गावित्येव ब्रूयात्। स्यादेतत्। अभावातिदेशार्थं तृतीयादिग्रहणं स्यात्। ततश्च विलक्षणे गुणनाभावे न स्यात्। क्रोष्टवे क्रोष्टुनेति तत्र वक्तुरधीने वाक्यशेषे भावातिदेशस्यैवाश्रयणात्। एवं तर्हि क्रोष्ट्रीति स्त्रियामीकारेण प्राप्नोति। अनङ्गमपि ईकारशास्त्रमतिदेशसामर्थ्यादतिदेक्ष्यत इति। एषोऽपि दोषः। अथवोत्तरयोर्योगयोरारम्भसामर्थ्याद्रूपातिदेश एव

अथवा किं न एतेनाहत्यानाहत्य वेति। आहत्य अनाहत्य च तृचो यच्छास्त्रं तदतिदिश्यते। अथवा पुनरस्तु रूपातिदेशः। अथैतस्मिन्रूपातिदेशे सति किं प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते। आहोस्वित्कृतेष्वादेशेषु। किं चातः। यदि प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते ऋकार एकोऽतिदिष्टः॥ अनङ्गुणरपरत्वदीर्घत्वान्यनतिदिष्टानि।

आश्रीयते पूर्वसूत्रे तु पक्षभेदविचारः। अथवेति। सूत्रत्रये एकरसप्रवृत्तिर्भवति सर्वरूपसंग्रहश्चेति भावः। प्रागादेशेभ्य इति। क्रोष्टृ इत्येतदकारान्तम्। कृतेष्विति। क्रोष्टाराविति रेफान्तम्। तत्र प्रागादेशेभ्यो यद्रूपं तत्प्रत्यक्षं तृज्वदित्युच्चारणाद्व्यापकं लघु च तस्मिन्नतिदिष्टे तन्निमित्तानां अनङादीनां सर्वेषां स्वशास्त्रेण प्रवर्तनात्कृतेषु चादेशेषु यद्रूपं लौकिकं तत्प्रधानं तदर्थत्वादितरस्य प्रक्रियालाघवं च भवतीति। तद्द्वयसंभवः। ऋकार एक इति। तदतिदेशसामर्थ्याच्च कार्यान्तराणामप्रसङ्गः स्यादिति मन्यते। ॥

ऋकारोऽनतिदिष्ट इति। किं पुनः ऋकारातिदेशस्य प्रयोजनं प्रयोगसमवायिरूपातिदेशेन गतत्वात्। अत्र केचिदाहुः। यत्र ऋकारस्य वि- 
कारा भावः पञ्चकोष्टृभी रथैरिति तत्र ऋकारोऽनतिदिष्टः स्यादिति। तदयुक्तम्। नहीदं वचनं कृतेष्वादेशेष्विति लौकिकप्रयोगरूपोप
लक्षणं त्वेतद्यथा च क्वचित्कृतेष्वादेशेषु लौकिकं रूपं तथा च क्वचिदकृतेष्विति नास्ति विशेषः। अत्रोच्यते। यदि ऋकारमनतिदिश्य
कृतेष्वादेशेषु यद्रूपं तदतिदिश्यते तदा क्रोष्ट्रेत्यादावुदात्तयणो हल्पूर्वादिति स्वरो न स्यादुदात्तयणोऽभावात्। सति हि ऋकारातिदे
शे तत्स्थानिकस्य यण उदात्तत्वात्स्वरः सिद्ध्यति। ननु स्वरदोषमनन्तरमेव वक्ष्यतीति तत्किमर्थमत्राभिधीयते अत्रैकतरपक्षाश्रयेण स्वरदोष
उच्यते परस्तात्तु पक्षद्वयेऽपि वक्ष्यते। नहि स्वरो रूपवानिति। ननु शब्दस्य श्रोत्रेन्द्रियग्राह्यस्वभावो रूपम्। स्वरोऽपि श्रोत्रेन्द्रियग्राह्यत्वाद्रूपमे
वास्य व्यतिरिक्तं रूपं नास्तीति न हि स्वरो रूपवानित्युच्यते तदात्मरूपस्यापि रूपं नास्तीति तदपि न रूपवदिति नातिदिश्येत। रूपातिदेश-

अथ कृतेष्वादेशेषु ऋकारोऽनतिदिष्टः। अनङ्गुणरपरत्वदीर्घत्वान्यतिदिष्टानि। उभयथा च स्वरोऽनतिदिष्टः। किं कार
णम्। नहि स्वरो रूपवान्। अस्तु प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते। ननु चोक्तं ऋकारोऽतिदिष्टः। अनङ्गुणरपरत्वदी
र्घत्वान्यनतिदिष्टानीति। नैष दोषः। ऋकारे अतिदिष्टे स्वाश्रया अत्र एते विधयो भविष्यन्ति।

स्वप्रकाशन्तो न रूपवदतिदेशः। अत्रोच्यते। प्रागादेशेभ्यो यद्रूपमित्यत्र तावत्पक्षे स्वरोऽशक्योऽतिदेष्टुं तद्धि रूपं शास्त्रीयम्। न च स्वरो रूपत्वे
नाश्रितः शास्त्रे एवुलन्तचावित्यस्मिंस्तूच्चारणोऽस्वरस्य भेदहेतुत्वेनानाश्रयणात्। लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यादावुदात्तादिग्रहणात्। यापि
चितोऽन्त उदात्त इति स्वरप्रतिपत्तिः सा वाप्यनुमानान्न तूच्चारणात्। कृतेष्वादेशेष्वित्यत्र तु पक्षे यद्यप्युच्चारणे उदात्तादिगुणानामभेदकत्वं
ज्ञापितं तथापि यथा आन्तरतम्यात्स्वर आश्रीयमाणो भेदकः। तथातिदेशादपि किं तूदात्तयणव्यपदेशाभावात् स्वरासिद्धिः। यद्येवं रूप
वानिति किमुच्यते। रूपमिति हि वक्तव्यम्। तत्र केचिदाहुः। भाष्यकारवचनात्स्वार्थिको मतुप्। अथवा स्वरवानेव स्वरः अर्शआदित्वादच्। 
नहि स्वरवान् कार उदात्तादिनारूपेण रूपवान् शास्त्रे आश्रीयते तस्याभेदकत्वात्। ऋकारेऽतिदिष्टे इति। तदर्थत्वाद्दकारातिदेशस्ये 
तिभावः। स्वाश्रया इति। स्वं निमित्तं शास्त्रं वा आश्रयो येषामिति समासः। ॥

सचकारेति। अन्यथात्वदितिब्रूयात्। नचतत्तृज्यां मन्योर्थवान्स्तच्छब्दोस्ति यस्य ग्रहणे दोषः स्यात्। तस्माद्वनुमेयोपिस्वरउच्चार्यमाणो-
श्रीयमाणोपिचकारोच्चारणाद्भवति। सर्वादेशप्रसङ्ग इति। रूपातिदेशशब्दात्त्यान्यादेशभावोभ्युपगतो भवतीत्यनेकाल्त्वात्सर्वादेशः
तृशब्दः प्राप्नोति सिद्धमिति। तृजन्तरूपातिदेशादित्यर्थः॥ आन्तरतम्यादिति। अर्थेन स्वरूपेण चेत्यर्थः। तद्विषय इति। तद्वद्भावविष
यइत्यर्थः। घरतिरिति। गृघ्सेचनेइति भौवादिकः। जिघर्तीत्यत्र तु। घृक्षरणदीप्त्योरित्यस्य बहुलं छन्दसीत्यभ्यासस्येत्वे कृतेरूपम्। र

यदप्युच्यते उभयथास्वरोऽनतिदिष्टः। नहिस्वरो रूपवानिति। सचकारग्रहणसामर्थ्यात्स्वरो भविष्यति। रूपाति
देश इति चेत्सर्वादेशप्रसङ्गः। रूपातिदेश इति चेत्सर्वादेशः प्राप्नोति॥ सर्वस्य तु नन्तस्य तृशब्द आदेशः प्राप्नोति। सि
द्धं तु रूपातिदेशात्। सिद्धमेतत्। कथम्। रूपातिदेशात्। रूपातिदेशोयम्। ननु चैवमेवकृत्वा चोद्यते रूपातिदेश इ
ति चेत्सर्वादेशप्रसङ्ग इति॥ सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात्। सिद्धमेतत्। कथम्। प्रत्ययग्रहणे
यस्मात्सविहितस्तदादेस्तदन्तस्य ग्रहणं भवतीत्येवं तु नन्तस्य तृजन्त आदेशो भविष्यति। एवमपि किंचिदेव तृजन्तं प्रा
प्नोतीदमपि प्राप्नोति पक्तेति। आन्तरतम्यात्तु सिद्धम्। क्रोष्टुर्यदन्तरतमं तद्भविष्यति। किं पुनस्तत्। क्रुशेर्यस्तृज्विहि
तस्तदन्तम्। तृज्वद्वचनमनर्थकं तद्विषयेत्वचोमृगवाचित्वात्। तद्विषये एतत्तृजन्तं मृगवाचि। तुनो निवृत्त्यर्थं त
र्हीदं वक्तव्यम्। तुनः सर्वनामस्थाने निवृत्तिर्यथा स्यात्। तुनो निवृत्त्यर्थमिति चेत्तत्सिद्धं यथान्यत्रापि। तुनो निवृत्त्यर्थ
मिति चेत्तदन्तरेणवचनात्सिद्धं यथान्यत्राप्यविशेषविहिताः शब्दा नियतविषया दृश्यन्ते। कान्यत्र। तद्यथा। घरतिरस्ना
यविशेषेणोपदिष्टः स घृतं घृणा घर्म इत्येवंविषयः। रश्मिरस्नायविशेषेणोपदिष्टः स राशिः रश्मिः रशना इत्येवंवि
षयः। लुशिरस्नायविशेषेणोपदिष्टः स लोष्ट इत्येवंविषयः। इदं तर्हि प्रयोजनम्। विभाषां वक्ष्यामीति। विभाषा तृ
तीयादिष्वचीति।

शिलुशी अपठितावपि भाष्यकारवचनाद्धातू बोद्धव्यौ प्रयुक्तानामिदमन्वाख्यानं न त्वस्मादपूर्वशब्दप्रतिपत्तिरिति नियतविषयत्वमुच्यते। अ
नेनैव न्यायेन अस्तेर्भूरित्यादीन्यपि प्रत्याख्येयानि। अबुधबोधनार्थं तु किंचिद्वचनेन प्रतिपाद्यते। न्यायव्युत्पादनार्थं च आचार्यः किंचित्प्रत्या
चष्टे न त्वेकः पन्थाः समाश्रीयते। ॥

अतिसखीनीति। अतिक्रान्तः सखायैरितिबहुव्रीहिः॥ कृश क्रोष्टुनेइति। क्रोष्टुशब्दः स्त्रीपुंसलिङ्गः इत्यन्यपदार्थस्य नपुंसकत्वं प्रदर्शितं।
क्रोष्टूनामिति। तज्वद्भावः कृते नुडिनजादित्वान्नप्राप्नोतीत्यनित्यो नुडागमोपि कृते तज्वद्भावे सन्निपातपरिभाषयानप्राप्नोतीत्यनित्यः

वा वचनानर्थक्यं च स्वभावसिद्धत्वात्। वा वचनं चानर्थकम्। किं कारणम्। स्वभावसिद्धत्वात्। स्वभाव एव तृतीयादिषु अ
जादिषु विभक्तिषु तज्वन्तं तुन्नन्तं च समगवाचि इति। गुणवृद्ध्यौ त्वतज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम्। गुणवृद्ध्यौ त्वतज्व
द्भावेभ्यो नुम्भवतिपूर्वविप्रतिषेधेन। तत्र गुणस्यावकाशः अग्नये वायवे। नुमोवकाशः त्रपुणी। जतुनी। इहोभयं
प्राप्नोति। त्रपुणे। जतुने॥ वृद्धेरवकाशः सखायौ सखायः। नुमः स एव। इहोभयं प्राप्नोति। अतिसखीनि ब्राह्मणकुला
नीति। औत्वस्यावकाशः अग्नौ वायौ। नुमः स एव। इहोभयं प्राप्नोति। त्रपुणि जतुनीति। तज्वद्भावस्यावकाशः। क्रोष्टा
क्रोष्टुना। नुमः स एव। इहोभयं प्राप्नोति। कृश क्रोष्टुने अरण्याय हित क्रोष्टुने वृषलकुलाय। नुम्भवति पूर्वविप्रतिषे
धेन। सतर्हि पूर्वविप्रतिषेधो वक्तव्यो नवक्तव्यः इष्टवाची परशब्दो विप्रतिषेधे परं यदिष्टं तद्भवतीति। नुमचिरतज्वद्भा
वेभ्यो नुट्पूर्वविप्रतिषेधेनवक्तव्यः। नुमोवकाशः त्रपूणि। जतूनि। नुटोवकाशः अग्नीनां वायूनाम्। इहोभयं प्राप्नोति। त्र
पूणां जतूनाम्। अचिरादेशस्यावकाशः तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्ति। नुटः स एव। इहोभयं प्राप्नोति। तिसृणां। चतसृणां।
तज्वद्भावस्यावकाशः क्रोष्टा। क्रोष्टुना। नुटः स एव। इहोभयं प्राप्नोति। क्रोष्टूनां। नुड्भवति पूर्वविप्रतिषेधेन। सतर्हि पूर्वविप्र
तिषेधो वक्तव्यः नवक्तव्यः। नवा नुड्विषयेर प्रतिषेधात्। नवै तद्विप्रतिषेधेनापि सिध्यति तिसृणां चतसृणामिति। कथं तर्हि
सिध्यति नुड्विषयेर प्रतिषेधात्। नुड्विषयेर प्रतिषेधो वक्तव्यः। इतरथा हि सर्वापवादः। इतरथा हि सर्वापवादो रादेशः।
स यथैव गुणपूर्वसवर्णौ बाधते एवं नुटमपि बाधेत। तस्मान्नुड्विषयेर प्रतिषेधः। तस्मान्नुड्विषयेरादेशस्य प्रतिषेधो वक्त एम॰
व्यः। नवक्तव्यः। आचार्यप्रवृत्तिर्ज्ञापयति नरादेशो नुटं बाधत इति॥ ८०

नवेति। नुड्रेफयोर्विप्रतिषेध उक्तस्तेनेत्यर्थः। स यथैवेति। मध्येपवादा इत्येतदनाश्रित्यैतदुक्तं तत्र ह्याश्रीयमाणे गुणं न बाधेत गुणपूर्व
सवर्णग्रहणं उपलक्षणं ऋत उदित्युत्वस्यापि बाधनाश्रियतिस्रः स्वमित्यादौ॥ ॥

यदयमिति। नहि एकदेशे कृते दीर्घस्य प्राप्तिः। अनजन्तत्वान्नुडभावाच्च। एवं च विप्रतिषेधोऽपि न वक्तव्यः। ज्ञापकादेव नुड्भावात्। चतुरनडुहोरामुदात्तः॥ गौरादिषु अनडुही अनड्वाही इति पाठोऽपौराणिकः। अनडुह्शब्द एव ङीबर्थः पठित इति मत्वा वार्तिकमारब्धम् अनडुहः स्त्रियां वेति। ऋतइद्धातोः॥ नित्यो गुण इति। कृताकृतप्रसङ्गित्वात् लक्षणान्तरेण प्राप्नुवन्विधिरनित्य इत्यनाश्रित्य कार्यप्राप्तिमात्रमङ्गीकृत्येदमुक्तम्। लक्षणभेदापेक्षायां तु लक्षणान्तरस्य प्रवृत्तावपि विप्रतिषेधविषयस्य लक्षणस्याप्रवृत्त्या अनित्यत्वमेव॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकं पादश्च समाप्तः॥ ॥सिचि वृद्धिः परस्मैपदेषु॥ सिचि वृद्धाविति। इहानिर्दिष्टस्थानिकत्वात् इकः परिभाषोपस्थानादोकारस्य नास्ति प्राप्तिः। वदव्रजेत्यत्र तु चइति स्थानिनिर्देशादिक्परिभाषानुपस्थानादोकारस्य वृद्धिप्रसङ्गे वचनम्। तत्र सिचि वृद्धावित्यनेन प्रकरणं प्रदर्श्यते। अथवा सिचि या वृद्धिर्वदव्रजहलन्तस्याचः इत्यनेन तस्या

यदयं न तिसृचतसृ इति प्रतिषेधं शास्ति नामि दीर्घत्वस्य॥ चतुरनडुहोरामुदात्तः॥ आमनडुहः स्त्रियां वा। आमनडुहः स्त्रियां वेति वक्तव्यम्। अनडुही। अनड्वाही॥ ऋत इद्धातोः॥ उपधायाश्च॥ उदोष्ठ्यपूर्वस्य॥ इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन॥ इत्वोत्वयोरवकाशः आस्तीर्णं निपूर्ताः पिण्डाः। गुणवृद्ध्योरवकाशः चयनं चायकः। लवनं लावकः। इहोभयं प्राप्नोति। आस्तरणं आस्तारकः। निपरणं निपारकः। गुणवृद्धी भवतो विप्रतिषेधेन। अयुक्तोऽयं विप्रतिषेधः। योऽयं गुणस्येत्वोत्वयोश्च। कथम्। नित्यो गुणः। इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये सप्तमस्य प्रथमे द्वितीयमाह्निकं पादश्च समाप्तः॥ ॥सिचि वृद्धिः परस्मैपरस्मैपदेषु॥ सिचि वृद्धावोकारप्रतिषेधः॥

मित्यर्थः॥ ननु च वृद्धौ कर्तव्यायां पूर्वत्रासिद्धमिति सिज्लोपादीनामसिद्धत्वात्पूर्वं वृद्ध्या भाव्यम्। ततः सिज्लोपेन ततो ढत्वधत्वष्टुत्वढलोपेषु कृतेष्वोत्वेनेति वृद्धिविधानकाले ओकारस्याभावान्नार्थः प्रतिषेधेन। उच्यते॥ वृद्धिरङ्गापेक्षत्वात्प्रत्ययविशेषापेक्षत्वाच्च बहिरङ्गाः सिज्लोपादयस्तु वर्णनिमित्तत्वादन्तरङ्गा इत्यसिद्धं बहिरङ्गमन्तरङ्ग इति वृद्धेरसिद्धत्वात्पूर्वत्रेति निर्दिष्टस्यासिद्धविषयस्याभावात् सलोपादीनामसिद्धत्वं नास्ति। पूर्वत्रासिद्धमित्यनेन सलोपादीनामसिद्धत्वादन्तरङ्गलक्षणस्य विषयस्याभावात्तदपेक्षबहिरङ्गत्वस्यापि बहिरङ्गस्याभावादसिद्धं बहिरङ्गमन्तरङ्ग इत्येषा परिभाषा न प्रवर्तते। तदेवं परस्परप्रतिबद्धस्य परिभाषाद्वयस्याप्रवृत्तौ परत्वात्सलोपादीन्कृत्वा अन्तरङ्गत्वात् पूर्वमोत्वप्रवृत्तिमभ्युपगम्य चोदयति। वदव्रजेत्यत्र चान्तरेणान्तग्रहणं तदन्तविधौ सिद्धेऽन्तग्रहणमोपदेशिकहलन्तप्रतिपत्त्यर्थं मन्यते। प्रत्ययलक्षणेन च सिच्परत्वम्॥

ओकारादिति॥ न च अन्तरङ्ग ओकारः बन्ध्वपेक्षत्वात्। उक्तं तत्रेति। ओदस्येत्युच्यमानेनाद्पि परस्य परद्वत्यकारस्य तपरत्वाद्भिन्नकालस्य-ग्रहणं न स्यादिति तस्यापि ग्रहणार्थं वर्णग्रहणं कृतमिति तत्सामर्थ्यात्कृतायामपि वृद्धावोत्वं प्रवर्तते। प्रवृत्तत्वाच्च लक्षणस्य पुनर्वृद्धिः प्रवृत्तिर्न भवति। सौढामित्रिरिति। सोढा अमित्रा येनेति बहुव्रीहिः। विभज्यान्वाख्याने सढ अमित्र इत्यत्र स्थिते परत्वाद्वृद्धिं मन्यते। बहिरङ्गलक्षणत्वादिति। यत्र विप्रतिषेधः स्यात्तत्र पुनःप्रसङ्गविज्ञानम्। इह तु वृद्धिनिमित्तेऽनुपजात एव अन्तरङ्गमोत्वं प्रवर्तते ततोऽर्थान्तराश्रय तद्धितनिमित्ता वृद्धिः॥ अतोल्लान्तस्य॥ अन्तग्रहणमिति। अवयववचनोऽन्तशब्दस्तदन्तविधिनैव च तदर्थो लब्ध इति मत्वा प्रश्नः। तद्यः सामीप्यद्

सिचि वृद्धौ ओकारस्य प्रतिषेधो वक्तव्यः। उदवोढाम्। उदवोढम्। उदवोढेति। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। ओकाराद्वृद्धिर्विप्रतिषेधेन। ओत्वं क्रियतां वृद्धिरिति। वृद्धिर्भविष्यति विप्रतिषेधेन। ओकाराद्वृद्धिर्विप्रतिषेधे नेति चेदोत्वाभावः। ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्वस्याभावः। उदवोढामुदवोढमुदवोढेति। नैष दोषः। उक्तं तत्र वर्णग्रहणस्य प्रयोजनं वृद्धावपि कृतायामोत्वं यथा स्यात्। पुनःप्रसङ्गविज्ञानाद्वा सिद्धम्। अथवा पुनःप्रसङ्गादत्र वृद्धौ कृतायामोत्वं भविष्यति। यथा प्रसारणादिषु द्विर्वचनम्। तद्यथा। जग्ले। मम्ले। ईजतुः। ऊचुरिति। प्रसारणादिषु पुनःप्रसङ्गविज्ञानाद्द्विर्वचनं भवति। इहापि तर्हि पुनःप्रसङ्गविज्ञानादोत्वं स्यात्। सौढामित्रिरिति। सौढामित्रौ बहिरङ्गलक्षणत्वात्सिद्धम्। बहिरङ्गलक्षणा वृद्धिरन्तरङ्गमोत्वम्। असिद्धं बहिरङ्गमन्तरङ्गे॥ अतो ल्रान्तस्य॥ अन्तग्रहणं किमर्थम्। न अतो ल्र इत्येवोच्येत। केनेदानीं तदन्तस्य भविष्यति। तदन्तविधिना। इदं तर्हि प्रयोजनम्। अयमन्तशब्दोऽस्त्येवावयववाची। तद्यथा। वस्त्रान्तो वसनान्तः। अस्ति सामीप्ये वर्त्तते। तद्यथा। उदकान्तं गतः। उदकसमीपं गत इति गम्यते। तद्यः सामीप्ये वर्त्तते तस्येदं ग्रहणं यथा विज्ञायेत। अङ्गान्तौ यौ रेफलकारौ तयोः समीपे योऽकारस्तस्य यथा स्यात्। इह मा भूत्। अम्यद्रीत्। अवम्रीत्॥

ति। अन्तशब्दोपादानादेव सामीप्यार्थस्य ग्रहणम्। अङ्गान्ताविति। लश्च रश्च ल्रौ तदन्तः ततः षष्ठ्याः सुपां सुलुगिति लुक्। तत्र ल्रेणाङ्गस्य विशेषणात्तदन्तविधौ ल्रान्तस्याङ्गस्य योऽकारस्तस्य वृद्धिर्भवति। ततोऽन्तस्येत्यस्य कारो विशेष्यते। सन्निधानाच्च ल्रापेक्षं सामीप्यमकारस्य विज्ञायत इति सामर्थ्यादङ्गान्तरेफलकारसमीपस्याकारस्य वृद्धिरित्यर्थः संपद्यते॥ अम्यद्रीदवम्रीदिति। अत्राङ्गान्त्ययो रेफलकारयोः समीपे अकारो नेत्यनेन वृद्धिर्न भवति। हलन्तलक्षणा नेटीति प्रतिषिद्धा॥

वदव्रजहलन्तस्याचः॥ हल्ग्रहणं किमर्थमिति। अज्ग्रहणादेव हलन्तस्य सिद्धा वृद्धिरिति प्रश्नः। अङ्गेन चाचो विशेषणाद्यत्र तत्र स्थितस्याचो वृद्धिर्विधीयमाना हलन्तस्य प्रवर्तते। अजन्तस्य मा भूदिति। असति हल्ग्रहणेऽचाङ्गस्य तदन्तविधिर्विज्ञायेत। ततश्चाल्लोपादीन्बाधित्वा वृद्धिः स्यात्। लोपोऽत्रेति। विशेषणविशेष्यभावे कामचारादङ्गेनाज्विशेष्यते। तत्रापाक्षीदित्यादौ सावकाशा वृद्धिरतो लोपेन पूर्वविप्रतिषेधेन बाध्यते। एवं लोपाविवयङ्यण्गुणवृद्धिदीर्घेभ्य इति। अचा तु अङ्गे विशेष्यमाणे वृद्धिरनवकाशाऽतो लोपं बाधेत। आकारस्य तर्हीति। स्थानेन्तरतमपरिभाषयाऽत्राप्रवृत्तिं मन्यते। तन्मते गौणो हि प्रधानं विफलत्वादुपरुध्येत॥ नास्त्यत्र विशेष इति। विशिष्टविषयव्यवस्थापनं प्रधानस्य गु

वदव्रजहलन्तस्याचः॥ हल्ग्रहणं किमर्थम्। समुच्चयो यथा विज्ञायेत। वदिव्रज्योर्हलन्तस्य चाच इति। नैतदस्ति प्रयोजनम्। अज्ग्रहणादेवात्र समुच्चयो भविष्यति। वदिव्रज्योश्चाचश्चेति। अस्त्यन्यदज्ग्रहणे प्रयोजनम्। वदिव्रजिविशेषणं यथा विज्ञायेत। वदिव्रज्योरच इति। यद्येतावत्प्रयोजनं स्यात्। वदिव्रज्योरत इत्येव ब्रूयात्। अथवा एतदपि न ब्रूयात्। अत इति वर्तते। इदं तर्हि प्रयोजनम्। हलन्तस्य यथा स्यात्। अजन्तस्य मा भूत्। कस्य पुनरजन्तस्य प्राप्नोति। अकारस्य। अचिकीर्षीत्। अजिहीर्षीत्। लोपोऽत्र बाधको भविष्यति। आकारस्य तर्हि प्राप्नोति। अयासीत्। अवासीत्। नास्त्यत्र विशेषः सत्यां वा वृद्धावसत्यां वा। संध्यक्षरस्य तर्हि प्राप्नोति। नैवं संध्यक्षरमन्त्यमस्ति। ननु चेदमस्ति ढलोपे कृते उदवोढाम् उदवोढम् उदवोढेति। असिद्धो ढलोपः। तस्यासिद्धत्वान्नैतदन्त्यं भवति। अत उत्तरं पठति। हल्ग्रहणमिटि प्रतिषेधार्थम्। हल्ग्रहणं क्रियते। इटि प्रतिषेधार्थम्। नेटीति प्रतिषेधं वक्ष्यति स हलन्तस्य यथा स्यात्। अजन्तस्य मा भूत्। अलावीत्। अपावीत्। नवानन्तरप्रतिषेधात्। न वैतत्प्रयोजनमस्ति। किं कारणम्। अनन्तरस्य प्रतिषेधात्। अनन्तरं यद्वृद्धिविधानं तत्प्रतिषिध्यते।

णेन कर्तव्यमिति प्रवृत्त्यप्रवृत्त्योरुद्देश्ये विशेषाभावेऽपि नाशिष्टप्रधानोपरोध इति प्रवर्तत एवान्तरतमपरिभाषेति भावः॥ संध्यक्षरस्येति। औकारस्य औकारः प्राप्नोतीत्यस्ति विशेषस्तस्यासिद्धत्वान्नैतदन्त्यमिति। ननु मा भूदन्त्यमनन्त्यस्याप्यविशेषविधानात्प्राप्नोति। एवं तर्हि परोऽभ्युपगममनिष्टिपरमेतत्। परेणासंध्यक्षरस्यान्त्यत्वमभ्युपगतं निवार्यते अनन्त्यत्वे त्वोकारस्य यथा वृद्धिर्न भवति तथाद्यसूत्रे प्रतिपादितम्। हल्ग्रहणमिति। असतीह हल्ग्रहणे नेटीत्यत्राज्ग्रहणानुवृत्तावपि या काचिदचो वृद्धिः प्रतिषिध्येत। यदि त्वज्ग्रहणानुवृत्तिसामर्थ्यादच इत्येवं विहिता या वृद्धिस्तस्याः प्रतिषेधो विज्ञायेत तदा न स्याद्दोषः॥ परिहारान्तरसद्भावात्तु नेदमुक्तं तदाह॥ न वेति। ॥

अन्त्यस्य वचनानर्थक्यादिति। क्वचिदन्त्यो विधिभाङ्न संभवति। अयासीदित्यादौ तु विशेषाभावः। तदेवमिहार्थो हल्ग्रहणस्य नास्तीति मत्वाह।

अतो विभाषार्थमिति। असति हि हल्ग्रहणेऽकार्षीदकाणीदित्यादौ सावकाशा वृद्धिरचिकीर्षीदित्यादौ परत्वाल्लोपं बाधेत। अथवा अताङ्गस्य विशेषणात्तदन्तस्यैव स्यान्न त्वकाणीदित्यादौ॥ कृतायामपीति। आतो लोपइटि चेत्यनेनेति भावः। अत्र शब्दान्तरप्राप्तिर्लक्षणान्तरप्राप्तिश्च नाश्रिता। कृताकृतप्रसङ्गित्वात्तु लोपस्य स्वकार्यस्यानाश्रितोपाधिभेदस्य नित्यत्वमाश्रितम्। परत्वादिति॥ यस्य लक्षणान्तरेण निमित्तं विहन्य

कुत एतत्। अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति। तच्चानन्त्यार्थम्। तच्चानन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते। कथं पुनर्ज्ञायतेऽनन्तरं वृद्धिविधानमनन्त्यार्थमिति। अन्त्यस्य वचनानर्थक्यात्। अन्त्यस्य वृद्धिविधाने प्रयोजनं नास्तीति कृत्वानन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते। अतो विभाषार्थं तर्हीदं वक्तव्यम्। अतो हलादेर्लघोरिति विभाषा वृद्धिं वक्ष्यति सा हलन्तस्य यथा स्यादजन्तस्य माभूत्। अचिकीर्षीदजिहीर्षीदिति। अतो विभाषार्थमिति चेत्तत्सिद्धम्। वृद्धेर्लोपो बलीयस्त्वात्। अतो विभाषार्थमिति चेत्तदन्तरेणापि हल्ग्रहणं सिद्धम्। कथम्। वृद्धेर्लोपो बलीयस्त्वात्। वृद्धेर्लोपो बलीयान्भवतीति। इदमिह संप्रधार्यं वृद्धिः क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वाद्वृद्धिः। नित्यो लोपः। कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि। अनित्यो लोपः। नहि कृतायां वृद्धौ प्राप्नोति। परत्वात्सिचीड्भ्यां भवितव्यम्। नात्र सगिटौ प्राप्नुतः। किं कारणम्। एकाचस्तौ बलीति वा। एकाचः सगिटावुच्येते। अथवा बलीति तत्रानुवर्तते। किं पुनः कारणमेकाचस्तौ बलीति वा। दरिद्रातेर्माभूदिति। दरिद्रातेर्न सगिड्भ्यां भवितव्यम्। उक्तमेतत्। दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति। यश्चेदानीं प्रत्ययविधौ सिद्धः सिद्धोऽसौ सगिड्विधौ।

तेन तदनित्यमिति नाश्रितम्। लोपेनात्र वृद्धौ कृतायां न भाव्यमिति तस्यानित्यत्वमित्येतावदाश्रित्योच्यते। वृद्धिरेवा~पवादनिमित्ततामुपयान्ती लोपं विहन्तीति तदपेक्षया भवत्येव लोपस्यानित्यत्वम्॥ एकाचस्तौ बलीति। एकीयमतमेतत्। तथा च वाचायतन्यामिति यदाकारलोपो 
दरिद्रातेर्नोस्ति तदादरिद्रासीदिति सगिटावुदाहृतावेव। सिद्धश्चेति। आर्धधातुके विषयभूत एव लोपविज्ञानात्। ॥ 

एवमर्थमिति। अचिकीर्षीदित्यादौ वृद्धौ कृतायां सगिटौ माभूतामतो लोपस्य नित्यत्वं यथा स्यादित्येवमर्थम्। तत्र नित्यत्वाल्लोपे कृते न पारि शेष्याद् हलन्त एव वृद्धेरवस्थानान्नार्थो हल्ग्रहणेन। अतोऽङ्गस्य तदन्तविधिं मत्वाह। कं पुनरिति। नित्यादप्यनवकाशं बलवदिति लोपं बा धित्वा वृद्धिः स्यादित्यजन्तनिवृत्त्यर्थं हल्ग्रहणं कर्तव्यम्। इतरस्त्विष्टसिद्धये विशेषणविशेष्यभावे कामचाराल्लघुग्रहणसामर्थ्याच्चा ङ्गेनाविशेष्यत इति प्रतिपादयितुमाह। भवेदिति। अदरिद्रासीदित्यादिसिद्धये सगिड्विधावेकाच इति यदा नानुवर्त्यते तदाऽभयोरनित्य

एवमर्थमेव तर्हि काज्ग्रहणमनुवर्त्यमत्र सगिटौ माभूतामिति। स एष नित्यो लोपः वृद्धिं बाधिष्यते। कं पुनर्भवानवृद्धेरव काशं मत्वाह नित्यो लोप इति। अनवकाशा वृद्धिर्लोपं बाधिष्यते। सावकाशा वृद्धिः। कोऽवकाशः। अनन्त्यः। अकणीदकाणीत्। कथं पुनः सत्यन्त्येऽनन्त्यस्य वृद्धिः स्यात्। भवेद्यो नाङ्गं विशेषयेत्। तस्यानन्त्यस्य न स्यात्। वयं तु खल्वङ्गेनाकारं विशेषयिष्यामः। तत्रानन्त्यो वृद्धेरवकाशः। अन्त्यस्य लोपो बाधको भविष्यति। एवं वृद्धेर्लोपो बलीयस्त्वात्। एवं वृद्धेर्लोपो बलीयान्। अथवा आरभ्यते पूर्वविप्रतिषेधः। ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धम्। सा तर्ह्येषाऽन न्त्यार्था वृद्धिर्हलन्तस्य यथा स्यादजन्तस्य माभूत्। अपिपठिषीत्। एतदपि नास्ति प्रयोजनम्। कथम्। हलादेरिति नैषा बहु व्रीहिः षष्ठी हल् आदिर्यस्य सोऽयं हलादिः हलादेरिति। कानर्हीयं कर्मधारयात्पञ्चमी हल् आदिः हलादिः हलादेः पर- स्येति। यदि कर्मधारयात्पञ्चमी। अचकासीदत्र प्राप्नोति। सिचा आनन्तर्ये विशेषयिष्यामः। हलादेः परस्य सिच्यनन्त रस्येति। यदि सिचा आनन्तर्ये विशेष्यते। अकणीदकाणीदत्र न प्राप्नोति। वचनाद्भविष्यति। इहापि तर्हि वचनात्प्राप्नो ति। अचकासीत्।

योः पूर्वविप्रतिषेधेन लोपे कृते हलन्त एव वृद्धिरवतिष्ठते। अथवा लक्षणभेदाच्छब्दान्तरमाश्रित्य वा लोपस्यानित्यत्वं यो मन्यते तं प्रत्यु- च्यते। अथवारभ्यत इति। अपिपठिषीदिति। अल्लोपस्यस्थानिवद्भावादजन्तमेतदङ्गं तत्र यशब्दाकारस्य वृद्धिः प्राप्नोति। हल्ग्रह- णान्न भवति। अचकासीदिति। चकाराद्धल आदेः परो काारो भवतीति वृद्धिप्रसङ्गः। बहुव्रीहावप्ययं दोषः। ननु चादिकृते हलआदित्व- न्नास्ति। नैष दोषः। सिजन्तस्याङ्गस्याडागमः क्रियमाणस्तस्यैव हलादित्वं निवर्तयति। ननु सिचि यदङ्गं तस्य। ॥

 

येननाव्यवधानमिति। ननुवचनादतोलोपोबाध्येतसिचाह्यानन्तर्यआश्रितेऽनन्त्योनैववृद्धेरवकाशःस्यात्। नैतदस्ति। लघुग्रहणमेवमनर्थकंस्याद्व्यवच्छेद्याभावात्। ततश्चानन्त्यस्यवृद्ध्यवकाशत्वादन्त्यस्यनित्यत्वपूर्वविप्रतिषेधाभ्यांलोपाद्व्यवधानएववृद्ध्याभाव्यमितिनिर्दिष्टग्रहणादधिकव्यवधाननिवृत्त्यर्थोयेननाव्यवधानमित्याश्रीयते। तदेवमुक्तरार्थंहलग्रहणंनकर्तव्यमितिस्थितेयदुच्यते। एवंतर्हीति। प्रसक्तानुप्रसक्त्याप्रयोजनकथनप्रसङ्गेन हलग्रहणमतिसक्तंदूरमपगतमित्यर्थः। क्वचिदनुसृतमितिपाठः। तत्रायमर्थोदूरंयातंसदनुसृतंनपरित्यक्तम्। एतदुक्तंभवति। अत्रैवसूत्रेहलग्रहणस्यप्रयोजनमस्तितद्दर्शयति। हलग्रहणमनन्त्यार्थमिति। केचिदाहुः। सतिहलग्रहणेभवति। अगवीदिति। केचित्तुतदृष्ट्वातोरित्यतोधातुग्रहणानुवृत्त्याअगवीदित्यत्रअतोहलादेर्लघोरितिवृद्धिर्नभवतीत्याहुः। सिचाधातावाक्षिप्तेपुनर्धातुग्रहणाद्यस्यनित्यंधातुत्वंसगृह्यते। तस्मादयमर्थोयेननाव्यवधानमित्येकेनहलाव्यवधा

येननाव्यवधानंतेनव्यवहितेपिवचनप्रामाण्यात्। केनचनाव्यवधानम्। वर्णेनैकेन। संघातेनपुनर्व्यवधानंभवतिनचभवति। यदिसिचाआनन्तर्यंविशेष्यते। अस्तुबहुव्रीहेःषष्ठी। कस्मान्नभवति। अपिपठिषीदिति। व्यवहितत्वात्। एवंतर्हिअतिदूरमेवेदंहलग्रहणमनुसृतम्। हलग्रहणमनन्त्यार्थम्। अज्ग्रहणमनिगर्थम्। स्यन्तक्षण ॥ किमर्थंजागर्तेर्वृद्धिप्रतिषेधउच्यते। सिचिवृद्धिर्माभूदिति। नैतदस्तिप्रयोजनम्। जागर्तेर्गुणउच्यते। वृद्धिविषयेप्रतिषेधविषयेचसबाधकोभविष्यति।

नेटिजचोर्वृद्धिःस्यात्। ननुसंयोगेनाराङ्क्षीदभाङ्क्षीदित्यादौ। हलग्रहणेनुसतिवर्णग्रहणेजातिग्रहणात्संयोगान्तस्यापिहलग्रहणसामर्थ्याद्भवति। अनन्त्यार्थमित्यस्यायमर्थोनन्त्योपिहल्कथंनामगृह्येत। अन्तग्रहणंतुविस्पष्टार्थम्। तदन्तरेणापितदन्तविधित्वलाभात्। किन्तुहलोऽचइत्युच्यमानेजन्तस्याङ्गस्यहलस्थानेवृद्धिरित्ययमप्यर्थःआशङ्क्येत। अज्ग्रहणमनिगर्थमिति। अन्यथेक्परिभाषोपस्थानादभैत्सीदित्यादावेवस्यान्नत्वपाक्षीदित्यादौ॥ स्यन्त॥ किमर्थमिति। गुणेनबाधितावृद्धिर्नप्राप्नोतीतिमन्यते। सिचिवृद्धिर्माभूदिति। अतोल्लान्तस्येत्यनेनेतिभावः। इतरस्तुसिचिवृद्धिरिनिप्राप्तिरनेनोक्तासाचायुक्तेतिमत्वाह। नैतदस्तीति। वृद्धिप्रतिषेधविषयादन्यत्रसामान्यलक्षणेनगुणस्यसिद्धत्वाज्जागृणोविचिणलङित्स्वितिगुणविधानंवृद्धिप्रतिषेधविषयार्थंसंपद्यते। ॥

गुणो न हीति। अङ्गवृत्त इत्येतत्तु निष्ठितत्वदुर्ज्ञानत्वादनाश्रितम्। यदि तर्हि गुणो रपरत्वे च कृते लक्षणान्तरेण वृद्धिर्भवति तदा जागरकइ
त्यादावजन्तलक्षणां वृद्धिं बाधित्वा गुणो प्रवृत्तेः रपरत्वे चातउपधाया इति वृद्धिः प्राप्नोति। नैष दोषः। चिण्णलोर्गुणप्रतिषेधात्सिद्धादुपधा
लक्षणा वृद्धिर्न भवतीत्यवसीयते। अन्यथा चिण्णलोर्गुणरपरत्वयोः कृतयोरुपधालक्षणाया वृद्ध्याः सिद्धातिरूपमिति प्रतिषेधं न वि
दध्यात्। यदि च गुणे कृते वृद्धिमात्रप्रवृत्तेर्लिङ्गं चिण्णलोः प्रतिषेध आश्रीयते तदा जागरहणं शक्यमकर्तुम्। इयं तर्हीति। आर्थीय-
मुत्सर्गापवादयोः क्रमः नेटीति प्रतिषेधे प्राप्ते ऽतो ल्रान्तस्येति वृद्धेरारम्भात् प्रतिषेधोत्तरकाले त्युच्यते। पाठक्रमेण पूर्वकालापि। अप
र आहेति। पूर्वोक्त एवार्थो वाचोयुक्त्यन्तरेणोच्यते। कक्ष्ययेति। कक्ष्यां विशिष्टदेशस्थं तुलासूत्रं वणिजो व्यवहरन्ति। अत्र तु कक्ष्येव क
क्ष्या। यथा कक्ष्या द्रव्याणां गुरुत्वं परिच्छिनत्ति तथा शास्त्रं कार्याणां सामान्यविशेषावस्थाभावेन बलाबलं व्यवस्थापयति। हर्म्यावस्था

गुणो न तर्हि कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति। नेटीति तस्याः प्रतिषेधो भविष्यति। इयं तर्हि प्रतिषेधोत्तरकाला
वृद्धिरारभ्यते अतो ल्रान्तस्येति। अपर आह। कक्ष्यया कक्ष्या निमातव्या। सिचि वृद्धिश्च प्राप्नोति गुणश्च। गुणो भवति। गु
णे कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति। नेटीति च तस्याः प्रतिषेधो भवति। प्रतिषेधोत्तरकालमतो हलादेर्लघो
रिति विभाषा वृद्धिः प्राप्नोति। न च किंचित्। अतो ल्रान्तस्येति च वृद्धिः प्राप्नोति। न च किंचित्॥ नेड्वशि कृति॥ किमर्थं पुरस्ता
त्प्रतिषेध उच्यते। न विध्युत्तरकालः प्रतिषेधः क्रियते। न यथा। अन्यत्रापि विध्युत्तरकालाः प्रतिषेधा भवन्ति। क्वान्यत्र।
कर्तरि कर्मव्यतिहारे न गतिहिंसार्थेभ्य इति। देवताद्वन्द्वे च नेन्द्रस्य परस्य॥

वचनो वा कक्ष्याशब्द उपचारादिहावस्थावचनः तत्र किं कार्यं सामान्यावस्थं किं विशेषावस्थमित्येवं कक्ष्यया कक्ष्या निमातव्येत्यर्थः॥ बलं वा
कक्ष्याया यथा तुल्यकक्ष्याविति। तत्र जागृ इ स् ई त् इति स्थिते वार्णादाङ्गं विधिर्बलीयानिति यणादेशं बाधि सार्वधातुकार्धधातुकयोरिति
गुणः प्राप्तस्तमपवादत्वाद्बाधित्वा सिचि वृद्धिरिति वृद्धिः प्राप्ता तामपवादत्वाद्बाधित्वा जाग्र इति गुणः प्राप्नोति। भाष्यकारस्तु दुर्बलत्वादु
त्सर्गपरिहृत्य वृद्धेरारम्भं गणयति॥ न च किंचिदिति। तस्याः प्राप्तिः क्वा वृद्धेरपवादभूतं न किंचिद्गुणविधानमस्ति यतो जागरहणमकर्त
व्यं स्यात्। गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्॥ पुनर्वृद्धिर्निषेधश्च यणपूर्वाः प्राप्तयो नव॥ इति संग्रहश्लोकः॥ नेड्वशि। प्राप्तिपूर्वक
त्वात्प्रतिषेधस्यार्थात्पूर्वं विधिप्रकरणं पठितव्यं पश्चात्प्रतिषेधप्रकरणं क्रमव्यतिक्रमे प्रयोजनाभावादिति पृच्छति॥ किमर्थमिति। ॥

पूर्वस्मादपिविधिरिति।सम्बन्धसामान्यवचनषष्ठ्यन्तस्यपूर्वशब्दस्यविधिशब्देनसमासआश्रीयते।अथवावर्णग्रहणान्नदन्तस्येल
ब्धेतान्तादित्यन्तग्रहणंप्रत्ययोपदेशकालेतान्तग्रहणार्थमितिमाथितिकेकादेशाप्रसङ्गः।अथापीति।सर्पिषायजुषेत्यादौष-
त्वार्थंव्युत्पत्तिपक्षोऽप्यङ्गीक्रियते।क्रियतेन्यासएवेति।येषांठशब्दानामिकइष्यतेतेषकारःस्वरितउच्चारितस्तदनुकरणस्य
रितमेवठस्येतिनचोणादिठस्याकारःस्वरितइत्यादेशाप्रसङ्गः॥इसुसु॥आशिषेति।आङःशासुइच्छायामित्यस्मादाशासनमाशीरि
तिसंपदादित्वाद्भावेक्विप्।आशासःक्वावुपसंख्यानमितीत्वम्।उषेति।वसेःक्विपूर्वचिस्वपीतिसंप्रसारणम्।षत्वस्यासिद्धत्वादिसु
सोभवतइतिकादेशप्रसङ्गः।लक्षणेति।लाक्षणिकमनुमेयरूपम्।प्रतिपदोक्तंतुप्रत्यक्षरूपम्।अयेति।दोष्कइतिदस्यतेनचमा

नैषदोषः।अकारलोपस्यस्थानिवद्भावान्नभविष्यति।नसिध्यति।पूर्वविधौस्थानिवद्भावः।नचायंपूर्वविधिः।अ
यमपिपूर्वविधिः।पूर्वस्मादपिविधिःपूर्वविधिरिति।अथाप्युणादयोव्युत्पाद्यन्ते।एवमपिनदोषः।क्रियतेन्यास
एवविशिष्टग्रहणंठस्येति।इसुसुक्तान्तात्कः॥इहकस्मान्नभवति।आशिषानरतिआशिषिकः।उषातरतिऔषि
कः।लक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्यैवेति।अथेहकथंभवितव्यंदोर्भ्यांतरति।दोष्कइतिभवितव्यम्।कथम्।
यदिवर्णैकदेशावर्णग्रहणेनगृह्यन्ते।होहन्तेर्ञ्णिन्नेषु॥किमिदंञ्णिन्नकारग्रहणंहन्तिविशेषणम्।ञ्णिन्नकार
परस्यहन्तेर्योहकारइति।आहोस्विद्धकारविशेषणम्।ञ्णिन्नकारपरस्यहकारस्यसचेद्धन्तेरिति।

प्नोतीतिप्रश्नः।दोष्कइति।नरतीतिठक्।उपसंख्येयोत्रकादेशइतिभावः।क्वचित्तुकथंयदिवर्णैकदेशावर्णग्रहणेनगृह्यन्तइतिपाठः।तत्रय
दीतिनिपातोनसंदेहार्थउपात्तः।किंतर्हियदेत्यस्यार्थेवर्तते।ओकारेयउकारःसउकारग्रहणेनगृह्यते।यत्रचसमुदायाश्रयंकार्यंनास्तितत्रा
वयवाःस्वकार्यस्यप्रयोजकाएव।तथाचनुड्विधिलादेशविनामाऋकारावयवाश्रयाःप्रवर्तन्ते।अग्रहणपक्षेतुयथानुड्विधिलादेशविनामे
षुप्रतिविधीयतेतथादोषउपसंख्यानंकर्तव्यमितिसंदेहार्थोपियदिशब्दोव्याख्येयः।होहन्ते॥किमिदमिति।हन्तिरपीहोपात्तोहकारोऽपित रामः
त्रकिंहकारस्यप्राधान्याद्विशेषणसंबन्धोऽयमप्रधानोपकारायगुणस्यापिहन्तेःपक्षद्वयेऽपिदोषदर्शनात्प्रश्नः।द्वन्द्वनिर्दिष्टास्तुञ्णिन्नाएक- ११७
योगक्षेमान्यायादितिभिन्नेनसंबन्धिनासबन्धंप्रतिपत्तुमनर्हाञ्णिन्तिहन्तेर्नकारेहकारस्येति। ॥

हन्तेरिति। स्वावयवेन पौर्वापर्यायोगात् ञ्णित्यप्राप्तिरिति। तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्धकारस्य च ञ्णितानन्तर्यासंभवात्। वचनादिति। निर्दिष्टपरिभाषोपस्थानाद्येन नाव्यवधानमिति शब्दान्तरव्यवायो निवर्त्यते। इतरत्तु व्यवधानसंभवान्निर्दिष्टाङ्गविकलपरिभाषोपस्थानं मत्वाह। इहापीति। स्थानिवद्भावाच्चाचेति। अचो यआदेशो लोपस्तस्येत्यर्थः। नकारग्रहणेति। सर्वत्र व्यवहितो नकारो हकारात्पर इति नकारग्रहणसामर्थ्यादिति। इग्रहणसामर्थ्याच्छ्रुतिकृतमानन्तर्यमाश्रयिष्यते। सिद्धं त्विति। नकारग्रहणमपनी।

कस्मात्र विशेषः। हन्तेस्तत्परस्येति चेन्नकारे प्रसिद्धिः। घ्नन्ति घ्नन्तु अघ्नन्। अस्तु तर्हि हकारविशेषणम्। हकारस्येति चेद् ञ्णित्यप्राप्तिः। घातयति घातकः। किं कारणम्। व्यवहितत्वान्न प्राप्नोति। वचनाद्भविष्यति। इहापि वचनात्प्राप्नोति। हननमिच्छति हननीयति हननीयतेर्ण्वुल् हननीयक इति। स्थानिवद्भावाच्चाचो नकारे प्रसिद्धिः। स्थानिवद्भावाच्चाचो नकारे प्रसिद्धिः। घ्नन्ति घ्नन्तु वचनाद्भविष्यति। वचनप्रामाण्यादिति चेदल्लोपे प्रतिषेधः। वचनप्रामाण्यादिति चेदल्लोपे प्रतिषेधो वक्तव्यः। हन्ता हन्तुम्। नकारग्रहणसामर्थ्यादल्लोपे न भविष्यति। अस्त्यन्यन्नकारवचनस्य प्रयोजनम्। किम्। श्रूयमाणविशेषणम्। यत्र नकारः श्रूयते तत्र यथा स्यात्। इह मा भूत्। हतो हथ इति। सिद्धं तूपधालोप इति वचनात्। सिद्धमेतत्। कथम्। उपधालोपे चेति वक्तव्यम्। सिध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवास्तु। ननु चोक्तं हन्तेस्तत्परस्येति चेद् नकारे प्रसिद्धिरिति। वचनाद्भविष्यति। अथवा पुनरस्तु हकारविशेषणम्। ननु चोक्तं हकारस्येति चेद् ञ्णित्यप्राप्तिरिति। वचनाद्भविष्यति। ननु चोक्तमिहापि वचनात्प्राप्नोति हननीयक इति। नैष दोषः। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्। न कश्चिद्धात्ववयवेनाव्यवधानम्। णेन पुनः संघातेन व्यवधानं भवति न च भवति। यदप्युच्यते स्थानिवद्भावान्नकारे प्रसिद्धिरिति।

यउपधालोपग्रहणं कर्तव्यम्। वचनाद्भविष्यतीति। एकग्रहणकवाक्यनिबन्धनानि बहूनि वाक्यानि लक्ष्यस्य संस्कारकाण्युपपन्नवन्तो। होहन्तेर्ञ्णिति होहन्तेर्णोनि होहन्तेर्न इति। सह विवक्षायां द्वन्द्वेऽपि यथासंभवं विशेषणविशेष्यभाव इति ञ्णिता णिता च हन्तिर्विशेष्यते नकारेण हकारः। येन नाव्यवधानमिति। तस्मिन्निति निर्दिष्ट इति परिभाषोपस्थानेन धात्ववयवेन नित्यव्यवायाच्छब्दान्तरेणाव्यवधानं निवार्यते ॥

वचनादिति। सन्निपिस्यानिवद्भावकृतेऽव्यवधानेऽश्रुतिकृतानन्तर्यमाश्रयणादू। नापिशास्त्रकृतमिति। यथामव्रितंपूर्वमविद्यमानवदित्युक्तंतथा
कारस्यराते राणव्यवधायकत्वंनक्वचित्सन्निपादितमित्यर्थः। कुतश्चिदिति। निर्दिष्टपरिभाषोपस्थानादू। अभ्यासा। असुपइति। असुबन्तावय ७ ३ २
वस्य हन्तेरभ्यासात्परस्यकुत्वंन तुसुबन्तावयवस्येत्यर्थः। हन्तेरभ्यासादिति। अङ्गाधिकारेण चाभ्यासेनचप्रत्ययस्याक्षेपादभ्यासनिमित्ते प्रत्य
ये हन्तेरङ्गस्य योऽभ्यासस्तस्मात्कुत्वमितिभावः। इतरस्त्वगृहीताभिप्राय आह। हन्तेरिति। पूर्वोक्तेनाभिप्रायेणाह। हन्तेरङ्गस्येति। तथाचोक्तम्।

वचनाद्विषयाति। ननुचोक्तं वचनप्रामाण्यादिति चेदल्लोपे प्रतिषेधइति। नैषदोषः। आनन्तर्यमिहाश्रीयते। हकारस्य
नकारइति। क्वचिच्च संनिपातकृतमानन्तर्यंनशास्त्रकृतमानन्तर्यं क्वचिच्चनसन्निपातकृतंनापिशास्त्रकृतंलो
पेसन्निपातकृतमानन्तर्यंनशास्त्रकृतमानन्तर्यम्। अलोपेनैवसन्निपातकृतंनापिशास्त्रकृतम्। यत्कुतश्चिदेवा
नन्तर्यंतदाश्रयिष्यामः॥ अभ्यासाच्च॥ अभ्यासात्कुत्वमसुपः। अभ्यासात्कुत्वमसुपइतिवक्तव्यम्। इहमाभूत्। हननम्
मिच्छतिहननीयतिहननीयतेः सन्‌जिहननीयिषतीति। तत्तर्हिवक्तव्यम्। नवक्तव्यम्। हन्तेरभ्यासादित्युच्यते
नचैषहन्तेरभ्यासः। हन्तेरेवाभ्यासः। कथम्। एकाचोद्वेप्रथमस्येति। एवंतर्हिहन्तेरङ्गस्ययोऽभ्यासस्तस्मादित्युच्यते।
नचैषहन्तेरङ्गस्याभ्यासः। हन्तेरङ्गस्यैषोऽभ्यासः। कथम्। एकाचोद्वेप्रथमस्येति। एवंतर्हियस्मिन्‌हन्तिरङ्गंतस्मिन्योऽभ्यासः
तस्मादित्युच्यते यस्मिंश्चात्रहन्तिरङ्गंतस्मिन्नाभ्यासः यस्मिन्नभ्यासो नतस्मिन्हन्तिरङ्गंभवति॥ हेरचङि॥ अचङी
तिकिमर्थम्। प्राजीहयद्दूतम्। हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्। हेश्चङि प्रतिषेधोऽनर्थकः। किंकारणम्
। अङ्गान्यत्वात्। ण्यन्तमेतत्। अङ्गमन्यद्भवति। लोपेकृतेनाङ्गान्यत्वम्। स्थानिवद्भावादङ्गान्यत्वम्। ज्ञापकंत्वन्यत्र
ण्यधिकस्यकुत्वविज्ञानात्। एवंतर्हिज्ञापयत्याचार्योऽन्यत्रण्यधिकस्यकुत्वंभवतीति।

सिद्धंतुपरस्परंप्रत्यङ्गप्रत्ययसंज्ञाभावादिति। नचैषहन्तेरङ्गस्येति। अभ्यासनिमित्ते प्रत्ययेहन्तिरत्रनाङ्गमित्यर्थः। इतरोऽङ्गमात्रमाश्रित्या
ह। हन्तेरिति। आचार्यः स्वाभिप्रायंप्रकाशयति। एवंतर्हीति। यथाजघानेत्यत्रलिहन्तिरङ्गंतस्मिन्नेवचाभ्यासः॥ हेर॥ अचङीतिकिमर्थमि
ति। यस्मिन्हिनोतिरङ्गंतस्मिन्नभ्यासेविज्ञायमानेणौहिनोतिरङ्गं चङ्यभ्यास इतिकुत्वंनभविष्यतीतिमत्वाप्रश्नः। अन्यत्रेति। सनादावित्यर्थः।

सन्लिटोः॥ जिज्यतुरिति। ज्या वयोहानौ लिट्यतुसि ग्रहिज्यादिसूत्रेण संप्रसारणे कृते पूर्वैकादेशे च यद्यपि हल इति दीर्घत्वं क्रियते तथा
प्येकदेशविकृतस्यानन्यत्वात् यथा जयतेर्जिगीषतीत्यत्र कुत्वं भवत्येवं जिनातेः प्राप्नोति॥ अध्यायेति। विभाषा चेरित्यत्र चेरित्यादेशः द्वादे
शात्तु गन्ता परस्य रोर्न भवति॥ न क्वादेः॥ क्वायजीति। चजोः कु घिण्ण्यतोरित्यत्र निष्ठायामनिट इति वक्तव्यं तेनैव क्वायजादीनां कुत्वनिवृत्तेः सि
द्धत्वान्नार्थः प्रतिषेधेनेत्यर्थः। ननु गृजुचुलुञ्चुकुजुखुजूनां निष्ठायामनिट्त्वात् घिण्ण्यतोः कुत्वं वार्तिककारमतेन प्राप्नोति। सूत्रकारमतेन तु
न क्वादेरिति प्रतिषेधप्रसङ्गः। तथा जिमर्जितर्जीनां निष्ठायां सेट्त्वात् कुत्वाप्रसङ्गः। उच्यते। वार्तिककारस्य सूत्रकारात्प्रमाणतरत्वान्नन्वते-
न तु कुत्वस्य भावाभावाववगन्तव्यौ। नन्वस्त्यजेः प्रतिषेधे वीतद्रति निष्ठायामनिट्त्वात् समाजद्रति कुत्वं प्राप्नोति। नैतदस्ति। व्यादेशो निष्ठा-

किमेतस्य ज्ञापने प्रयोजनम्। प्रजिघाययिषतीत्यत्र कुत्वं सिद्धं भवति॥ सन्लिटोर्जेः॥ जिग्रहणेऽज्यः प्रतिषेधः। जिग्रहणे
ज्यः प्रतिषेधो वक्तव्यः। जिज्यतुः जिज्युरिति। न वक्तव्यः। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। एवमेतस्य न भविष्य
ति। सा तर्ह्येषा परिभाषा कर्तव्या। अवश्यं कर्तव्या। अध्यायगतद्रत्येवमर्थम्॥ न क्वादेः॥ क्वायजिव्रजियाचिरुचीना
म प्रतिषेधो निष्ठायामनिटः कुत्ववचनात्। क्वायजिव्रजियाचिरुचीनाम प्रतिषेधः। अनर्थकः प्रति षेधोऽप्रतिषेधः।
कुत्वं कस्मान्न भवति। निष्ठायामनिटः कुत्ववचनात्। निष्ठायामनिटः कुत्वं वक्ष्यामि सेट्येतेन निष्ठायाम्। यदि निष्ठाया
यामनिटः कुत्वमुच्यते कथं शोकः समुद्ग इति। शुच्युब्ज्योर्घञि कुत्वं वक्तव्यम्। कथमर्कः। अर्चेः कविधानात्सिद्ध
म्। नैतद्घञन्तम्। औणादिक एष कशब्दः। तस्मिन्नाष्टमिकं कुत्वम्॥ भुजन्युब्जौ पाण्युपतापयोः॥

यामनिट एव यजिः। न च स्थानिवद्भावो निष्ठायामनिडिति लौकिके व्यपदेशेऽल्विधावार्धधातुके कार्येषु स्थानिवत्त्वात्। वज्रादावार्धधातुके विक-
ल्पइष्यत इति वीभावाभावपक्षे अजित इति निष्ठायामजिः सेडेवा कथमिति। मुचुब्जी निष्ठायां सेटौ। ईदुपितः प्रतिभाव इति यद्यपि निष्ठा
यामनिट्त्वात्प्राप्त्यर्थमेदाघ्नाः शुचुब्जोर्घञीति यथान्यासे पिपठन्त्येव यथास्यात् एवमिमाभूदिति नियमार्थं वाच्यं तदेवन्यासमेदे विध्यर्थ-
मिति भावः। यद्यपि ग्रमेर्दुपसर्गाद् ड प्रत्यये सति समुद्ग इति सिध्यति तथापि उब्जेर्घञि जकारनिवृत्तये कुत्वमभ्युपेयम्। औणादिक इति। क
क्षाधारा विम्यः कः घिण्ण्यतोरस्त्वर्चौ चामिति न भवति॥ भुजा। भुजेरौणादिकस्य रौधादिकस्य वा पचि गुणकुत्वनिषेधे निपात्यते। ॥

भुजः पाणाविति। न्युब्जोपतापग्रहणं न कर्तव्यमित्यर्थः। लोके बाहौ भुजशब्दो भुजावयवत्वात्प्रयुज्यते। कर्तृप्रत्यय इति। पचाद्यच्। न्युब्जनीति। न्युब्जन्त्यस्मिन्नित्यधिकरणं प्रदर्शनीयम्। भाष्ये तु वस्तुमात्रं कथितम्। एषोऽपीति। यस्मिन्व्याधौ न्युब्जिताश्चेष्टारहिताः शेरते स व्याधिस्तान् न्युब्जयतीत्यच्। न चात्र घञचोः स्वरे विशेषः। थाथादिसूत्रेणान्तोदात्तत्वविधानात्। भुजशब्दस्तु घञ्याद्युदात्तो भवत्यचि त्वन्तोदात्तः स्यात्। प्रयाजा अविवाक्यस्येति। प्रवचर्यनियमः क्रियते तदाऽविवाक्यमित्येव स्यान्न त्वविवाच्यमिति। इयमपि चैतद्विषयविभागेनेष्यत इति यत्नान्तरं कार्यं न त्वयं नियमः। अन्योपसर्गपूर्वस्य च प्रतिषेध इष्यत एवादशरात्रस्य यज्ञविशेषस्य दशममहरविवाक्यमुच्यते। यस्मि

भुजन्युब्जौ पाण्युपतापयोः॥ भुजः पाणाविति वक्तव्यम्। कथं न्युब्ज उपताप इति। न्युब्जेः कर्तृत्वादप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः। कुत्वं कस्मान्न भवति। कर्तृत्वात्। नैतद्घञन्तम्। कर्तृप्रत्यय एषः। न्युब्जतीति न्युब्जः। अधिकरणसाधनो वै लक्ष्यते। न्युब्जिताः शेरतेऽस्मिन्न्युब्ज उपताप इति। एषोऽपि हि कर्तृसाधन एव। कथं। न्युब्जयतीति न्युब्जः। यजयाचरुचप्रवचर्चश्च॥ प्रवचिग्रहणमनर्थकं वचोऽशब्दसंज्ञाभावात्। प्रवचिग्रहणमनर्थकम्। किं कारणम्। वचोऽशब्दसंज्ञाभावात्। वचोऽशब्दसंज्ञायां प्रतिषेधः। उच्यते। प्रपूर्वश्च वचिः शब्दसंज्ञायां वर्तते। उपसर्गनियमार्थं तर्हीदं वक्तव्यम्। प्रपूर्वस्यैव वचेरशब्दसंज्ञायां प्रतिषेधो यथा स्यादिह मा भूत्। अविवाक्यमहरिति। उपसर्गनियमार्थमिति चेदविवाक्यस्य विशेषवचनात्सिद्धम्। विशेषत एवैतद्वक्तव्यम् अविवाक्यमहरिति। क मा भूत्। अविवाच्यमेवान्यदिति। ण्यप्रतिषेधे त्यजेरुपसंख्यानं कर्तव्यम्। त्याज्यम्॥ भोज्यम्॥ भोज्यमभ्यवहार्य इति वक्तव्यम्। इहापि यथा स्यात्। भोज्यः सूपः भोज्या यवागूरिति। किं पुनः कारणं न सिध्यति। भक्षिरयं खरविशदे वर्तते तेन द्रवे न प्राप्नोति। नावश्यं भक्षिः खरविशद एव वर्तते किं तर्ह्यन्यत्रापि वर्तते। तद्यथा। अब्भक्षो वायुभक्ष इति॥

न्याश्चिकानविब्रुवते न नाना वाक्यान्युच्चारयन्तीत्यर्थः। तत्र पृषोदरादित्वात्कुत्वमन्यत्र प्रतिषेध इति प्रवचिग्रहणं प्रत्याख्यातम्। त्यजेरिति। पूज्यमिति तु णयन्तस्य पूजेः रूपम्। भोज्यम्। नावश्यमिति। भाष्यकारः सूत्रन्यासं समर्थयते। अब्भक्ष इति। न च शब्दान्तरसन्निधिगम्यः सामान्यवाचित्वमिति शक्यं वक्तुम्। न हि शब्दस्यानभिधेयं शब्दान्तरसन्निधाने नाभिधीयते नित्यत्वाच्छब्दार्थसंबन्धस्य। भोज्यं भक्ष्यं लेह्यं पेयमित्यत्र गोबलीवर्दन्यायेन विशेषविषयत्वं भुजिभक्ष्योर्द्रष्टव्यम्॥

चोर्लो॥ भाष्यकारेणैवेति प्रत्याख्यातम्। केचित्त्वनित्यमागमशासनमित्यस्य ज्ञापकं दाग्रहणं वर्णयन्ति। अनित्यत्वादागमस्य दासति दद्धादिति न स्यादिति तत्सिद्धये वाग्रहणं क्रियमाणमेनां परिभाषां ज्ञापयति॥ ओतः॥ ओत इति। नहि श्यनोऽन्य ओतः शिदस्ति। तत्रायमप्यर्थ इति। न केवलं मात्रालाघवं यावदयमप्यर्थ इत्यर्थः। भ्रमत्विति। वाभ्राशेति वचनात्पक्षे श्यन्। मदत्विति। व्यत्ययेन श्यन्। शमादिभ्यो यो विहित इति। श्यन्नेव सर्वेभ्यः शमादिभ्यो विहित इति स एव गृह्यते। एवमपीति। शिद्विशेषणे शमादीनामुपयोगात्कार्यिनिर्देशाभावात्। अष्टानामिति। अष्टानामित्यनेन संख्येयाः कार्यिणो निर्दिश्यन्ते ते च सन्निधानाच्छमादय एव विज्ञायन्ते॥ ष्ठिवु॥ ष्ठिवुक्लमुचमां शिति॥

घोर्लोपो लेटि वा॥ वेति शक्यमवक्तुम्। कस्मान्न भवति तदग्निरग्नये दद्धात्। अस्त्वत्र लोपः। आटः श्रवणं भविष्यतीति तेनोभयं भविष्यति दधद्रत्नानि दाशुषे दधातु॥ ओतः॥ ओतः श्यनीति वक्तव्यम्। किं प्रयोजनम्। उत्तरत्र शिद्ग्रहणाभावाय। तत्रायमप्यर्थः। ष्ठिवुक्लमुचमां शितीति शिद्ग्रहणं न कर्तव्यं भवति। ननु च भोम्यन्यग्रहणमपि तर्हि उत्तरार्थं वक्तव्यम्। शमामष्टानां दीर्घः श्यनीति श्यन्ग्रहणं न कर्तव्यं भवति। अत्राप्यस्तु शितीत्येव। यदि शितीत्युच्यते। अनुनेन्द्रो भ्रमतु मदतु अत्रापि प्राप्नोति। शमादिभिरत्र शितं विशेषयिष्यामः। शमादीनां यः शिदिति। कश्च शमादीनां शित्। शमादिभ्यो यो विहितः। एवमपि तस्यति यस्यति। अत्र प्राप्नोति। अष्टानामिति वचनान्न भविष्यति॥ ष्ठिवुक्लमुचमां शिति॥ दीर्घत्वमाङि चम इति वक्तव्यम्। आचामति। इह मा भूत्। उच्चमति विचमतीति॥ इषुगमियमां छः॥ इषेश्छत्वमहलि॥ इषेश्छत्वमहलीति वक्तव्यम्। इह मा भूत्। इष्णाति। इष्यति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। अचीति वर्तते। एवमपीषाणेत्यत्र प्राप्नोति। अथाहलीत्युच्यमाने कस्मादेवात्र न भवति। नैवं विज्ञायते न हल् अहल् अहलीति। कथं तर्हि। विद्यमानो हल् यस्मिन्सोऽयमहल् अहलीति। यद्येवमचीत्यपि वर्तमानेन दोषः। न ह्यचा शिद्विशेष्यते शितीति भवति कतरस्मिन्नचीति। कथं तर्हि। शिताज्विशेष्यते अचि भवति कतरस्मिञ्छितीति।

तिहल्पाठादाह। दीर्घत्वमाङि चमेरिति। अथ वा सूत्रे तन्त्रमाङ्। न तु यथोपेयिवानित्यत्रोपशब्दोऽतन्त्रमिति प्रदर्शनाय वार्तिकारम्भः॥ इषु॥ इषुगमियमामिति पाठोऽनार्ष इत्याह। इषेश्छत्वमहलीति। इषाणेति। इष आभीक्ष्ण्ये इत्यस्माद्धलः श्नः शानज्झाविति शानच्। तस्य चाजादित्वाच्छत्वप्रसङ्गः। अथेति। अहलीति तत्पुरुषे शानजजादिरिति भावः। न ह्यचेति। विशेषणविशेष्यभावे कामचारात्तदादिविधिस्तदन्तविधिर्वा शिद्विशेषणेन भवति न विशेष्येण। ॥

पा॰प्रा॥ धातोरन्त इति चेदिति॥ धातोरित्यनन्तरोपदिष्टावुक्तौ अन्त इति वर्तते न वा॥ यद्यनुवर्तते तदा अनुदात्ते चेति सूत्रं कर्तव्यं दद्रातीत्याद्युदा ७।३।२
त्तार्थं तथापि वतीत्यादावाद्युदात्तत्वं मध्योदात्तनिवृत्त्यर्थं वान्तस्य धातोर्वे क्त्यमन्तग्रहणनिवृत्तौ तु क्तमप्राप्तत्वादादेरेवोदात्तत्वं सिध्य
ति। तत्रायं निर्णयः अन्त इति वर्तते ङुणौ त्याद्यर्थम्। अनुदात्ते चेति कृतमेव। पिबतेस्त्वाद्युदात्तनिपातनमिह कार्यम्। अथ वेति। सत्यपि
हलन्तत्वे गुणाभावः। पिबादेशेनैवाङ्गस्य प्रयोगार्हत्वात्। ज्ञाजा॥ अतो दीर्घो यञीति। अत्र सार्वधातुकग्रहणं तु रुसुस्त्रादनुवर्तते न तु ति

पा॰प्रा॰ घ्रास्थाम्नादाणदृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः॥ पिबेर्गुणप्रतिषेधः॥ पिबेर्गुणप्रतिषेधो वक्तव्यः। पिबति। लघूपधगुणः प्राप्नोति। स तर्हि प्रतिषेधो वक्तव्यो न वक्तव्यः। पिबतिरदन्तः। अदन्त इति चेदुक्तम्। किमुक्तम्। धातोरन्त इति चेदनुदात्ते च बह्ग्रहणमिति। अथ वाङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येत्येवं न भविष्यति। ज्ञाजनोर्जा॥ दीर्घोच्चारणं किमर्थम्। न ज्ञाजनोर्ज इत्येवोच्येत। का रूपसिद्धिः। जानाति जायते। अतो दीर्घो यञीति दीर्घत्वं भविष्यति। एवं तर्हि सिद्धे सति यद् दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा अङ्गवृत्ते पुनर्वृत्तावविधिरिति। किमेतस्य ज्ञापने प्रयोजनम्। पिबतेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति॥ जुसि च॥ जुसि गुणे यासुट्प्रतिषेधः। जुसि गुणे यासुडादौ प्रतिषेधो वक्तव्यः। चिनुयुः सुनुयुरिति। न वक्तव्यः। नैवं विज्ञायते मिदेर्गुणः जुसि चेति। कथं तर्हि मिदेर्गुणोऽजुसि चेति। किमिदं अजुसीति। अजादावुसि अजुसीति। इहापि तर्हि प्राप्नोति चक्रुः जुहुरिति। एवं तर्हि श्नीनीति वर्तते। एवमप्यजुहवुः अबिभयुरित्यत्र न प्राप्नोति।

ङीति। अत एवानेमुक्तपूर्वान्तः कृतो न परादिः दीर्घप्रसङ्गात्। अङ्गवृत्त इति। ज्ञादादीयस्य इत्याकारविधानस्य ज्ञापकत्वे जा इति दीर्घोच्चार
णे दीर्घश्रवणार्थमेतद्दीर्घोच्चारणे तु ज्ञापके तदाकारविधानमाकारश्रवणार्थम्॥ जुसि च॥ चिनुयुरिति। तद्धक्तस्य ग्रहणे नग्रहणमत इति रामः
गुणप्रसङ्गः। श्नीतीति वर्तत इति। ष्ठिवुक्लमु चमां शितीत्यतः। न च लिटि शिदस्ति। एवमपीति। उसि शितीति सामानाधिकरण्येन संबन्धः मन्यते। १२०

इतरस्तूसि यः श्नित् तस्मिन्निति संबन्धं मत्वाह। भूतपूर्वगत्येति। प्रत्ययलक्षणं तु नास्ति न लुमताङ्गस्येति निषेधात्। उकारादाविति। यासुडादेस्तु कारादित्वाद्ग्रहणाभावः। अनुबन्धनिर्देशाच्च लिङादेशस्योसो ग्रहणाभावः। अचीति वर्तत इति। क्ससस्याचीत्यतः॥ जाग्रोऽवि॥ इहेति। अङ्ग वृत्त इत्यनाश्रित्योच्यते। गुणस्यावकाशः जागरित इति। अचो ञ्णितीति वृद्धेरवकाशः कारक इति। जागरयतीत्यादौ उभयप्रसङ्गे परत्वाद्गुणे कृतेऽतउपधाया इति वृद्धिः प्राप्नोति। गुणभूतस्येति। गुणशब्दं स्वरूपपदार्थको गुणशब्देन भूतो निष्पन्नो गुणभूतस्तवं गुणशब्देनाभिनिर्वृत्तो गुणाभिनिर्वृत्तः। यद्यनेन गुणे कृतेऽतउपधाया इति वृद्धिः स्याच्चिण्णलोर्गुणप्रतिषेधोऽनर्थकः स्यात्कृते गुणे च

भूतपूर्वगत्या भविष्यति। न सिध्यति। न हि उस् श्नित् भूतपूर्वः। उसः श्नित्त्वं भूतपूर्वो नास्तीति कृत्वा। उसि यश्श्नित् भूतपूर्वस्तस्मिन् भविष्यति। अथवा क्रियते न्यास एव। अविभक्तिको निर्देशः। नैवं विज्ञायते मिदेर्गुणो जुसि चेति कथं तर्हि। मिदेर्गुण उ जुसि चेति। किमिदमुजुसीति। उकारादौ जुसि उजुसीति। अथवा अचीति निवर्तते तेन जुसं विशेषयिष्यामः अजादौ जुसीति॥ जाग्रो विचिण्णल्ङित्सु॥ इह जागरयति जागरक इति गुणे कृते रपरत्वे च अतउपधाया इति वृद्धिः प्राप्नोति तस्याः प्रतिषेधो वक्तव्यः। चिण्णलोः प्रतिषेधसामर्थ्याद्गुणभूतस्य वृद्धिप्रतिषेधः। यदयमचिण्णलोरिति प्रतिषेधं शास्ति। तज्ज्ञापयत्याचार्यो न गुणाभिनिर्वृत्तस्य वृद्धिर्भवतीति। किं पुनरयं पर्युदासः यदन्यद्धि चिण्णल्ङिद्भ्य इति। आहोस्वित्प्रसज्यायं प्रतिषेधः विचिण्णल्ङित्सु नेति। कश्चात्र विशेषः। प्रसज्यप्रतिषेधे जुसि गुणप्रतिषेध उत्तमे च णलि। प्रसज्यप्रतिषेधे जुसि गुणप्रतिषेधः प्राप्नोति। अजागरुः। उत्तमे च णलि प्रतिषेधः प्राप्नोति। अहं जजागर। न वानन्तरस्य प्रतिषेधात्।

द्यारूपस्यासिद्धत्वात्तस्माच्चिण्णलोः प्रतिषेध उपधावृद्ध्यभावस्य ज्ञापको वृद्धिमात्राभावस्य तु न ज्ञापकः। तथा च ह्यन्तक्षणेत्यत्र जागृग्रहणम् अजागरीदित्यत्र वृद्धिनिषेधार्थं कृतम्। अन्यथा गुणे कृते अतो ल्रान्तस्येति अनेन वृद्धिर्न भविष्यतीति किं जागृग्रहणेन। अजागरुरिति। लङः सिजभ्यस्तविदिभ्यश्चेति जुसादेशः। तस्य ङित्त्वाज्जुसि चेत्यनेनापि प्राप्तस्य निषेधः प्राप्नोति। तथा जजागरेत्यत्र णित्त्वाभावपक्षे सार्वधातुकार्धधातुकयोरित्यनेनापि प्राप्तस्य गुणस्य निषेधप्रसङ्गः। पर्युदासपक्षे तु न दोषः। तत्र विचिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते न च तेषु निषिध्यत इति लक्षणान्तरेण गुणः प्रवर्तत एव॥

जागृविरिति। वृद्‌जागृभ्यो विन्निति सूत्रपाठाश्रयेणचोद्यते। यदा तु ज्दृभ्रूस्तृजागृभ्यः क्विन्निति पाठस्तदा किलादेवार्धधातुकलक्षणगुण
प्रसङ्गः। यद्यपि प्रसज्यप्रतिषेधेऽप्ययं दोषोऽनन्तरस्य निषेधात्तथापि पर्युदासे दोषवानिति प्रतिपादनायेदमुच्यते। नवेति। यदि जागृवि
रित्यत्र लक्षणान्तरेण गुणः स्यात्तदा पर्युदासोऽनर्थकः स्यात्। क्विबर्थमिति। नहि लक्षणान्तरेण गुणप्रसङ्गः। नचात्र तदनुबन्धकपरि
भाषोपतिष्ठते। अनुबन्धस्यानिर्देशादिति विग्रहणेन। क्विबपि गृह्यत इति भावः। ञुद्धपरस्येति। विशब्दे इकारो निरनुनासिकः उच्चारि
त इति क्विपो ग्रहणं नास्ति। तस्य हीकारोऽनुनासिकः। क्वस्वर्थमिति। विशब्दः सप्तम्यन्तो निर्दिश्यते निपातनाच्च सप्तम्या अलुक् यथा वरेयत्नो

नवा एष दोषः। किं कारणमनन्तरस्य प्रतिषेधात्। अनन्तरं यद्गुणविधानं तस्य प्रतिषेधः। कुत एतत्। अनन्तरस्य वि
धिर्वा भवति प्रतिषेधो वेति जुसि पूर्वेण विधानम्। जुसि पूर्वेण गुणो विधीयते। जुसि चेति। णलि च। किम्। नवानन्त
रप्रतिषेधादित्येव णलि च पूर्वेण गुणो विधीयते सार्वधातुकार्धधातुकयोरिति। अथवा पुनरस्तु पर्युदासः। अतो
न्यत्र विधाने वा वगुणत्वम्। अतोन्यत्र विधाने वौ अगुणत्वं वक्तव्यम्। जागृविः। नवा पर्युदाससामर्थ्यात्। नवा वक्तव्य
म्। किं कारणम्। पर्युदाससामर्थ्यादत्र गुणो न भविष्यति। अस्त्यन्यत् पर्युदासे प्रयोजनम्। किम्। क्विबर्थपर्युदासः स्यात्। ञु
द्धपरस्य विशब्दस्य प्रतिषेधग्रहणम्। अनुनासिकपरश्च क्वौ विशब्दः। क्वस्वर्थं तर्हि पर्युदासः स्यात्। जागृवांसो अनुगमन्। क
थं पुनर्वेः पर्युदास उच्यमानो वस्वर्थः शक्यो विज्ञातुम्। सामर्थ्याद्वस्वर्थमिति चेन्न सार्वधातुकत्वात्सिद्धम्। वस्वर्थमिति चेत्तन्न
। किं कारणम्। सार्वधातुकत्वात्सिद्धम्। कथं सार्वधातुकसंज्ञा। छान्दसः क्वसुः। लिट् च छन्दसि सार्वधातुकमपि भवति। तत्र
सार्वधातुकमपिदिति ङित्वात्पर्युदासो भविष्यति।

वेति। अथवा इकार उच्चारणार्थ इति तिव्नतदादिविधानात् क्वसोर्ग्रहणं भवतीति भावः। इतरस्तु यथोक्तमप्रतिपद्य विइति समुदायो निर्दिष्ट
इति मत्वाह। कथं पुनरिति। इतरः पूर्वोक्तेनाभिप्रायेणाह। सामर्थ्यादिति। औणादिको न पर्युदस्यते लक्षणान्तरेण प्रसङ्गादिति सामर्थ्या रामः
दिकारादेः क्वसोर्ग्रहणमित्यर्थः। छान्दस इति। भाषायां सदवसश्रुभ्य एव क्वसुर्नान्येभ्य इति भावः। केचित्तु भाषायामपि क्वसुमिच्छन्ति त एवं १२१
परिहरन्ति। असंयोगाल्लिट् किदिति सिद्धे कित्वे क्वसोः कित्वं प्रतिषेधविषयस्यापि गुणस्य प्रतिषेधार्थमिति क्वसो गुणाभावः। ॥

अथवेति। अनच्कस्य हल उच्चारयितुमशक्यत्वादिकार उच्चारणार्थो निर्दिष्ट इति वकारादेर्ग्रहणं कसौ च प्रतिविहितमिति औणादिकाणवपर्यु
दस्तेन तत्सामर्थ्याल्लक्षणान्तरेणापि गुणो न भवति किं पञ्चलोपाद् दुर्गाश्रयेप्रत्ययलक्षणनिषेधाच्च पर्युदासं नेच्छन्ति। अन्येतु यथाऽतृणे
डिति प्रत्ययलक्षणेन इमागमो भवति वर्णस्य प्रत्ययविशेषणत्वादेवं क्विपोऽपि पर्युदास इत्याहुः॥ पुगन्ता संयोग इति। धात्वन्तप्रत्यययोर्ह
लोरानन्तर्ये संयोगे गुर्विति गुरुसंज्ञायां लघुसंज्ञाया बाधनाद् भेत्तेति गुणो न भवति। अजादौ च भेदनमित्यादौ सावकाशो गुणः॥ विध्यपेक्षमि-
ति। गुणविधानमिति शेषः। लघूपधाद्ये विहिते सार्वधातुकार्धधातुके तयोरङ्गस्य गुण इत्यर्थः। ननु पञ्चम्यभावात्कथं विधानं भविष्यति
। उच्यते। षष्ठीपक्षेऽपि लघूपधस्य ये सार्वधातुकार्धधातुके के च तस्य ये तस्माद्विधीयेते इत्युपपद्यते विधानविशेषणम्। ननु साम्प्रतिकल
घूपधसंभवे कथं विधानं विशेष्यते व्याप्तिन्यायाश्रयादेवं हि हलादावजादौ च गुणः सिध्यति। कथं कुण्डिरिति। अङ्गाधिकारे तु नो वि-

अथवा वकारस्यैवेदं मशक्तिजेनेकारेण ग्रहणम्॥ पुगन्तलघूपधस्य च॥ संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति। संयो
गे गुरुसंज्ञायां भेत्ता भेत्तुमिति गुणो न प्राप्नोति॥ विध्यपेक्षं लघोर्ग्रहणम्॥ विध्यपेक्षं लघुग्रहणं कृतम्। लघोश्चासौ विहितः
। कथं कुण्डिर्न दुष्यति। कुण्डिना हुण्डिना। अत्र कस्मान्न भवति। धातोर्नुमः। धातोर्नुम्विधावुक्तं तत्र धातुग्रहणस्य प्रयो
जनम्। धातूपदेशावस्थायामेव नुम्भवतीति। कथं रञ्जेः उपधालक्षणा वृद्धिः आश्वयो रागः स्यन्दिश्रन्थ्योर्निपातनात्।
यदयं स्यन्दिश्रन्थ्योर्वृद्ध्यर्थं निपातनं करोति तज्ज्ञापयत्याचार्यो भवत्येवंजातीयकानां वृद्धिरिति। विचित्रो रागः

धानादृक्त एव नुमि प्रत्यये लघूपधाद्विधीयते तस्मिन्परतो नुमि गुणः प्राप्नोति। उक्तं तत्रेति। तेन कुण्डेति गुणोऽप्यहलन्त्य इत्यकारः सिध्यति अन्य-
था किं न स्यात्। कथं रञ्जेरिति। यदि षष्ठीनिर्देशेऽपि विधानं विशेष्यते तदान्यत्रापि प्रसङ्गः न तत्राकारोपधाद्विहिते प्रत्यये वृद्धिर्विधीयमाना रञ्जे
ः प्रत्यये परतः पुरस्तान्नकारोपधत्वाद् वृद्धिर्न प्राप्नोति। राग इति। रञ्जेश्च घञि च भावकरणयोरिति नलोपः। ननु चोपधाया अकारस्य वृद्धिरुच्य
ते न च ततः प्रत्ययविधिसंभव इति विध्यपेक्षत्वं नाश्रयिष्यत एवं मन्यते। आकारोपधाद्यो विधीयते सोऽवयवादनुमानाद्विहितो भवति। स्यन्दि
श्रन्थ्योरिति। नलोपार्थं वृद्ध्यभावार्थं निपातनम्। यदि वृद्धिविधौ विधानं विशेष्यते तेन नो वृद्धिप्रसङ्गाभावात्तदभावार्थं निपातनं न क्रियेत नलोप
सिद्धये विधिरेवाश्रीयेत अनेकप्रयोजनसिद्धये निपातनाश्रयणम्॥ ॥

अनङ्लोपेति। अल्लोपोनइत्यत्र षष्ठीनिर्देशेऽन्नन्ताद्विहितेप्रत्ययेलोपोविधीयमानोराज्ञइत्यादावेवस्यान्नास्मादभेत्यादौ। शिदीर्घत्वंच
सामानीत्यादावेवस्यान्नतुकुण्डानीत्यादौ। तस्मात्षष्ठीनिर्देशेविधानविशेषणेदोषप्रसङ्गाद्गुणोभेत्तुर्नसिध्यति। अभ्यस्तस्येति। अज्ग्रह-
णस्यप्रयोजनंनेनेनीत्यादौगुणप्रतिषेधोमाभूत्। यद्विचहलादावलघूपधत्वाद्गुणोनस्यात्तदागुणस्यप्राप्तिरेवनास्तीतिकिंतन्निषेधनि
वारणार्थेनाज्ग्रहणेन। लङर्थमिति। लुङ्प्रत्ययेगुणप्रतिषेधनिवारणायाज्ग्रहणंनज्ञापकम्। अनेनेगिति। णिजिरशौचपोषणयोरित्य-
स्माल्लुङि इति पूर्णपूर्प्लुः द्विर्वचनंनिजांत्रयाणांगुणःश्लावित्यभ्यासस्यगुणः हलङ्याभ्यइतितिलोपः प्रत्ययलक्षणेनलघूपधागुणः
। क्नुसनोरिति। ननुसनःकित्वममभावार्थंस्यात्। सिसृक्षतिदिदृक्षतइतिकथंज्ञापकम्। उच्यते। यद्येतावत्प्रयोजनंस्यात्तदासृजिदृशोर्झल्त्य

अनङ्लोपशिदीर्घत्वेविध्यपेक्षेनसिध्यतः। अनङ्लोपःदध्नासक्थ्ना। शिदीर्घत्वंकुण्डानिवनानि। एवंतर्हि। अभ्यस्तस्ययदाहाचि
। यदयंनाभ्यस्तस्याचिपिनिसार्वधातुकइत्यजग्रहणंकरोतितज्ज्ञापयत्याचार्योभवत्येवंजातीयकानांगुणइति। लङ
र्थेतत्कृतंभवेत्। लङर्थमेतत्स्यात्। अनेनेक। क्नुसनोर्यत्कृतंकित्त्वंज्ञापकंस्याल्लघोर्गुणे। यदयंत्रसिगृधिधृषिक्षिपेःक्नुःइ
कोझल्हलन्ताच्चेतिक्नुसनौकितौकरोतितज्ज्ञापयत्याचार्योभवत्येवंजातीयकानांगुणइति। संयोगेगुरुसंज्ञायांगुणोभेत्तु
र्नसिध्यति। विध्यपेक्षंलघोश्चासौकथंकुण्डिर्नेदुष्यति। धातोर्नुमःकथंरञ्जेःस्यन्दिश्रन्थ्योर्निपातनात्। अनङ्लोपशिदीर्घ
त्वेविध्यपेक्षेनसिध्यतः। अभ्यस्तस्ययदाहाचिलङर्थंतत्कृतंभवेत्। क्नुसनोर्यत्कृतंकित्त्वंज्ञापकंस्याल्लघोर्गुणे॥ नाभ्यस्त
॥ अभ्यस्तानामुपधाह्रस्वत्वमचिपस्पशानेचाकशीमिवावशातीरितिदर्शनात्। अभ्यस्तानामुपधाह्रस्वत्वमचिवक्तव्यम्।
किंप्रयोजनम्।

नकित्सनोरित्येवब्रूयात्। तस्माद्गुणप्रतिषेधार्थमपिकित्वंज्ञापकमेवकिंतुधिप्सतिधीप्सतीत्यत्रनलोपार्थंसनःकित्वंस्यादितिक्नोरेवकित्वं
ज्ञापकम्॥ नाभ्य॥ अभ्यस्तानामिति। गुणप्रतिषेधमविधायह्रस्वत्वमेवविधेयंसर्वेष्टसिद्धयइतिभावः। किंप्रयोजनमिति। गुणनिषेधेह्रस्वे- राम॰
नाविशेषंमत्वाप्रश्नः। पस्पशातइति। स्याशिर्वार्तिककारवचनादपठितोऽपिधातुस्तस्माल्लेटेव्यत्ययेनात्मनेपदंटेरेत्वंलेटोडाटावि- १९२
त्याट्। पूषापोबहुलंछन्दसीतिश्लुः द्विर्वचनम्। ॥

चाकशीमीति। काशृ दीप्तौ यङ्लुक्। लट्। मिप्। शप्लुक्। यङो वेतीडागमः। वावशीतीति। वाशृ शब्दे। यङ्लुक्। लट्। शतृ। ङीप्। जुजोषदिति। जुषी-
प्रीतिसेवनयोः। लेट्। व्यत्ययेन परस्मैपदं। तिप्। इतश्च लोपः परस्मैपदेष्विति इकारस्य लोपे लेटोऽडाटावित्यट्। व्यत्ययेन शपः श्लुः। द्विर्वचनं गु-
णो क्ङिति न। ह्रस्वाभावः। यदिति। दीधीति। यदि गुणनिषेधं मत्वा व्याख्या योपधाह्रस्वो विधीयते तदा नन्नेंनीति गुणपरत्वयोः कृतयोर्ह्रस्वमाविन्युपधा
नास्तीति रूपं न सिध्यतीति गुणनिषेधपरव्याख्यानं। ननु परत्वाद्गुणं बाधित्वा ह्रस्वो भविष्यति सकृद्गतौ विप्रतिषेध इति पुनर्गुणो न भवि-
ष्यति। एवं तर्हि पुनःप्रसङ्गविज्ञानाद्गुणः स्यात्। स्वशिकशिवशय इति। स्वश बाधनस्पर्शनयोः। कश गतिशासनयोरिति केचित्पठन्ति। अन्ये
तु कस गतिशासनयोरिति। तन्मतेन कशिः सौत्रो धातुः। कशेर्मुट्। प्रतिघ शश्च कशेरिति पाठाद्दशकान्तौ। भूएकाज्ग्रहणमिति। द्विर्वचने कृ-

पस्पशाते चाकशीमि वावशीतीति दर्शनात्। पस्पशाते चाकशीमि वावशीतीति प्रयोगो दृश्यते। कपोतः शरदं पस्पशाते।
अहं सुवनं चाकशीमि। वावशीति हृदाजदिति। बहुलं छन्दसि आनुषक् जुजोषदिति दर्शनात्। बहुलं छन्दसीति वक्तव्यमुप
धाह्रस्वत्वम्। किं प्रयोजनं आनुषक् जुजोषदिति दर्शनात्। यस्त आतिथ्यमानुषक् जुजोषत्। यद्युपधाह्रस्वत्वमुच्यते। प्रियां
मयूरः प्रतिनन्नेंनीति। यद्व त्वं नरवरनन्नेंनीमि हृष्टः। अत्र गुणः प्राप्नोति तस्मान्नार्थ उपधाह्रस्वत्वेन। कस्मान्न भवति पस्पशा
ते चाकशीमि वावशीतीति। स्वशिकशिवशयः प्रकृत्यन्तराणि॥ भूसु॥ भूसुवोः प्रतिषेधे एकाज्ग्रहणं बोभवीत्यर्थम्।
भूसुवोः प्रतिषेधे एकाज्ग्रहणं कर्तव्यम्। किं प्रयोजनम्। बोभवीत्यर्थम्। इह माभूद्बोभवीति। यद्येकाज्ग्रहणं क्रि
यते अभूत्। अत्र न प्राप्नोति। कर्तर्हि स्यात्। माभूत्। तस्मान्नार्थ एकाज्ग्रहणेन। कस्मान्न भवति बोभवीति। बोभूत्विन्ये
तन्नियमार्थं भविष्यति। अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रेति।

तेऽनेकाच्त्वे गुणनिषेधनिवृत्त्यर्थम्। बोभवीति। यङ्लुगन्ताल्लेटि तिप्। लेटोऽडाटावित्यट्। माभूदिति। न माङ्योग इत्यट्प्रतिषेधाद
काच्त्वम्। अत्रैवेति। सिद्धे गुणनिषेधे निपातनं नियमार्थम्। यद्येवं सोषवीतीति गुणनिषेधः प्राप्नोति। उच्यते। भाष्यं यथोत्तरं मुनीनां प्रामाण्य
वपामवेक्ष्य। स्वापकमिति वक्तव्ये नियमार्थमिति वचनादथवा नियमार्थेन निपातनेन द्वयोरपि भूसुवोर्यङ्लुकि गुणनिषेधो नि
वार्यते। यद्वा छान्दसो यङ्लुक्। न च सुवो यङ्लुगन्तस्य छन्दसि प्रयोगः। भाषायां तु क्वचिद्यङ्लुग्भवति न सर्वत्र। ॥

भा॰कै॰ तृणहः॥ किमर्थमिति। तृह इत्यस्य निवृत्त्यर्थो विकरणनिर्देशो भवति ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानादिति ७ ३ २
१२३ प्रश्नः। न ह्यसत्यनु इति। व्यवस्थार्थमित्येवं ब्रुवता पूर्वं श्नमो भावः पश्चादिमू इत्युक्तं भवति। श्नमो भावायेति तूच्यमाने श्नमो न प्रदर्शितः स्यात्। तृणह
ः॥ अपिदर्थमिति। नाभ्यस्तस्याचि पिति सार्वधातुक इति सार्वधातुकग्रहणं पिद्विशेषणं संबद्धमिति तदनुवृत्तौ पितोऽप्यनुवृत्तिः स्यादिति न-
न्विदं त्वर्थमन्यत्सार्वधातुकग्रहणमित्यपितोऽपि इड् भवति। हलग्रहणमनुवर्तते न हि तत्सार्वधातुकग्रहणेन सह निर्दिष्टं यत्तन्निवृत्तौ

कमाभूदिड्बोभवतीति॥ तृणहः॥ किमर्थं तृहेरागतश्नमको गृह्यते। न तृहेरिमू भवतीत्येवोच्येत। तृणहिग्रहणं श्नमि मो व्य-
वस्थार्थम्। तृणहिग्रहणं श्नमि कृते इत्यथा स्यात्। तृहिग्रहणे हि विषयेऽश्नमभावोऽनवकाशत्वात्। तृहिग्रहणे हि सति इ-
मू विषये श्नमो भावः स्यात्। किं कारणम्। अनवकाशत्वात्। अनवकाश इमू श्नमं बाधेत। इदमयुक्तं वर्तते। किमत्रायु-
क्तम्। तृहिग्रहणं श्नमि मो व्यवस्थार्थमित्युक्त्वा तत उच्यते तृहिग्रहणे हि विषयेऽश्नमभावोऽनवकाशत्वादिति। नत्र वक्त-
व्यं तृणहिग्रहणं श्नमि मोऽभावाय तृहिग्रहणे हि विषयेऽश्नमभावोऽनवकाशत्वादिति। न तर्हि वक्तव्यम्। न वक्तव्यम्। व्यव-
स्थार्थमित्येव सिद्धम्। न ह्यसतो व्यवस्थेति॥ तुरु॥ सार्वधातुक इति वर्तमाने पुनः सार्वधातुकग्रहणं किमर्थम्। पुनः सार्वधातु-
कग्रहणमपिदर्थम्। अपिदर्थोऽयमारम्भः। अधिगोशमीध्वं सुशमिशमीध्वं शमीध्वमधिगो॥ बहुवचने॥ अतो दीर्घाद्ब-
हुवचन एत्त्वं विप्रतिषेधेन। अतो दीर्घाद्बहुवचन एत्त्वं भवति विप्रतिषेधेन। अतो दीर्घो यञि सुपि चेत्यस्यावकाशः वृक्षाभ्यां
प्लक्षाभ्याम्। बहुवचने झल्येदित्यस्यावकाशो वृक्षेषु प्लक्षेषु। वृक्षेभ्यः प्लक्षेभ्य इत्युभयं प्राप्नोति। एत्त्वं भवति विप्रतिषे-
धेन॥ अम्बार्थ॥ डलकवतीनां प्रतिषेधो वक्तव्यः। अम्बाडे। अम्बाले। अम्बिके। न लङ्ह्रस्वत्वं वाडि संबुध्योः। न लोह्रस्वत्वं
वाहि संबुध्योरिति वक्तव्यम्। इदेवत्।

वृत्तौ निवृत्तिः स्यात्। शमीध्वमिति। शमेरन्तर्भावितण्यर्थात् प्रैषे लोट् व्यत्ययेनात्मनेपदं शपस्तस्य बहुलं छन्दसीति लुक्॥ अम्बा॥ डल रामः
कवतीनामिति। अर्थग्रहणेन स्त्रीत्वेनाम्बार्थाः शब्दा निर्दिष्टाः। श्रुत्यपेक्षया वा स्त्रीत्वेन निर्देशः। असंयुक्ता ना चडलकानां ग्रहणाद- १२३
क्का ह्रेति ह्रस्वो भवत्येव। ॥

देवतद्इति। ङौ ह्रस्वे कृते ङ्याब्ग्रहणेऽदीर्घ इति स्थानिवत्त्वनिषेधादाम्बाडागमौ न भवतः। अम्बार्थमिति। द्व्यच एवाम्बार्थस्य ग्रहणाड्डलकवतामर्थात् प्रतिषेधः कृतो भवति। अवश्यमिति। व्यत्ययो बहुलमिति दीर्घस्य ह्रस्वः। मातृणामिति। पूर्वपदे बहवो मातृशब्दाद् इति बहुवचनं मातृशब्दस्य मातजादेशो वक्तव्यो यो मातृशब्दः पुत्रार्थं पुत्रमभिधातुमुपादीयते बहुव्रीहौ च वर्तिपदैरन्यपदार्थोऽभिधीयत इति तत्रैवायं संबुद्धौ मातजादेशः। गार्गीमातेति। गार्गी माता अस्येति बहुव्रीहौ नद्युतश्चेति कपूयेन न प्राप्त इति मातजा बाधते। यः पुत्रः स्त्राप्यगुणत्वात्कुलसंभूतया मात्रा व्यपदेशमर्हति तत्र मातजादेशो नान्यत्र। गर्गवत्साभ्यां गर्गादियञ्यञश्चेति ङीप्॥

देवते देवतायां देवते। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। स कथं न वक्तव्यो भवति। अम्बार्थं द्व्यक्षरं यदि। यद्यम्बार्थं द्व्यक्षरं गृह्यते। तत्तर्हि ह्रस्वत्वं वक्तव्यम्। न वक्तव्यम्। अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम्। उपगायन्तु मां पत्नयो गर्भिणयो युवतय इत्येवमर्थम्। मातॄणां मातच् पुत्रार्थमर्हते। मातॄणां मातजादेशो वक्तव्यः पुत्रार्थमर्हते। गार्गीमात वात्सीमात॥ ह्रस्व॥ इह कस्मान्न भवति नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु। ह्रस्ववचनसामर्थ्यात्। अस्त्यन्यद्ध्रस्ववचने प्रयोजनम्। एष विभक्तिं मोच्चीचरमिति। शक्यं एष विभक्तिमनुच्चारयितुम्। कथमेवमयं ब्रूयात्। अम्बार्थानां ह्रस्वः नदीह्रस्वयोर्गुण इति। यद्येवमुच्यते जसि चेत्यत्र नद्या अपि गुणः प्राप्नोति। एवं तर्हि योगविभागः करिष्यते। अम्बार्थनद्योर्ह्रस्वः। ततो ह्रस्वस्य। ह्रस्वस्य च ह्रस्वो भवति। किमर्थमिदं गुणं वक्ष्यति तद्बाधनार्थम्। ततो गुणः। गुणश्च भवति ह्रस्वस्येति। अथवा ह्रस्वस्य गुण इत्यत्राम्बार्थनद्योर्ह्रस्व इत्येतदनुवर्तिष्यते।

स्व॥ इह कस्मादिति। ह्रस्वविधानं नद्या गुणविध्यर्थमेतस्मात्। एषमिति। यद्यम्बार्थानां ह्रस्व इत्युच्यमाने नद्या गुणो ह्रस्वस्य चेत्युच्यते तत्तदा- एषगुच्चारयितव्या भवति। एवमयं ब्रूयादिति। ह्रस्वं विधाय गुणे विधीयमाने प्रक्रियागौरवं भवतीति लाघवार्थं साक्षादेव गुणं विदध्यात्। नद्या अपीति। एकसमासनिर्देशाद्द्वयोरपि नदीह्रस्वयोरनुवृत्तिप्रसङ्गात्। ह्रस्वस्य चेति। ह्रस्वस्येत्यत्राम्बार्थनद्योरिति वर्तनेन नद्या ह्रस्वे कृते तस्य गुणबाधनाय ह्रस्व एव क्रियते। अथवेति। सिद्धे ह्रस्वे पुनरनुवृत्त्या तद्विधानं गुणबाधनार्थम्। ॥

जसि च। जसादिष्विति। आदिशब्दः प्रकारवाची प्रकरणेऽस्मिन्येषु कार्यं विधीयते ते जसादय इति। पूर्वयोगनिर्दिष्टानामपि ग्रहणमाद धीति। हृदिकारादक्तिन इति पक्षे ङीषि धानात्सिध्यति रूपद्वयम्। ङीपूर्विकल्पं त्वनपेक्ष्यैतदुक्तम्। शतक्रत्व इति। जसि चेति गुणाभाव पक्षे प्रथमयोरिति पूर्वसवर्णदीर्घोऽपि वा छन्दसीति वचनान्न भवति यणादेशः प्रवर्तते। किकिदीविशब्दः कविघ्नस्तित्वुणादिषु निपातितः॥ घेः। कुरुन इति। शेषो घ्यसखीति यस्य नदीसंज्ञा नास्ति स विसंज्ञ इति कुरुशब्दो घिः॥ याङ्॥ अतिखट्वायेति। खट्वामतिक्रान्त

जसि च। जसादिषु छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः। जसादिषु छन्दसि वेति वक्तव्यम्। किमविशेषेणेत्याह। प्राङ् णौ चङ्युपधायाः। किं प्रयोजनम्। अम्बे दर्वि शतक्रत्वः पश्वे किकिदीव्या। अम्बे अम्ब। दर्वे दर्वि। शतक्रत्वः। शतक्रतवः। पश्वे पशवे। किकिदीव्या किकिदीविना॥ घेर्ङिति॥ घेर्ङिति गुणविधाने ङीसार्वधातुके प्रतिषेधो वक्तव्यः। पट्वी मृद्वी। कुरुत इति सुबधिकारात्सिद्धम्। सुपि निवर्तते। क्व प्रकृतम्। सुपि च बहुवचने झल्येदिति॥ याडापः॥ इह तिखट्वायाति मालायेति। ह्रस्वत्वे कृते स्यान्निवद्भावाद्याट् प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। न वक्तव्यः। याड्विधाने तिखट्वायेत्य प्रतिषेधो ह्रस्वादेशत्वात्। याड्विधानेऽतिखट्वायातिमालायेत्य प्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः। याट्कस्मान्न भवति। ह्रस्वादेशे यम्। उक्तं चैतत्। ङ्याब्ग्रहणेऽदीर्घ इति। अथेदानीमसत्यपि स्यान्निवद्भावे दीर्घत्वे कृते आबसौ भूतपूर्व इति कृत्वा याट् कस्मान्न भवति। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। ननु चेदानीं सत्यपि स्यान्निवद्भावे नयापरिभाषया शक्यमुपस्थातुम्। नेत्याह। नहीदानीं क्वचिदपि स्यान्निवद्भावः स्यात्॥ ङेराम्॥ ॥

इदुद्भ्यामाम्विधानमौत्वस्य परत्वात्। इदुद्भ्यामाम्विधेयः।

इति श्रादिसमासे ह्रस्वे च कृते चतुर्थ्येकवचनस्य ङेः ऐट् इति प्राप्नोति याडाप इति च तत्र परत्वाद्याट् प्राप्नोति तत्र कृते दीर्घत्वे चातिखट्वायै देवदत्तायेति प्रसङ्गः। ह्रस्वादेशत्वादिति। यतो ह्रस्वादेशः कृतस्ततो रूपभेदादापू ग्रहणेन तस्य ग्रहणाभावात्। स्यान्निवत्त्वं च नास्तीत्याह। उक्तं चैतदिति। लक्षणेति। अकारस्य दीर्घे सत्याडिति लाक्षणिकं रूपमिति न तस्य ग्रहणम्। ननु चेति। ङ्याब्ग्रहणेऽदीर्घ इति न वक्तव्यमिति चोद्यते नेत्याहेति। परिहारः। ङेः॥ ॥

शकट्यामिति। शकटिशब्दस्य ङिति ह्रस्वश्चेति वा नदीसंज्ञाविधानात्तदभावपक्षे घिसंज्ञायां शकटाविति भवति। नदीसंज्ञापक्षे तु परत्वादौत्वं प्राप्नोति। आमेव काशः। कुमार्यामिति। औत्वस्यावकाशः। सख्यौ पत्याविति। अत आह। इदुद्भ्यामिति। पूर्वविप्रतिषेधआश्रयणीय इत्यर्थः। ननु कृते औत्वे पुनः प्रसङ्गविज्ञानादाम्भविष्यति। पुनरौत्वं न भविष्यति। चक्रके विष्ठतो व्यवस्थापनात्। नैतदस्ति। द्व्यपदार्थपक्षे सकृद्गतिपरिभाषया न स्यात्। योगविभागदिति। इदुद्भ्यामित्यत्र योगे नदीग्रहणानुवृत्त्या सख्यौ पत्यावित्यत्रामो प्रसङ्गः॥ औत्॥

शकट्यां पद्धत्यां धेन्वामिति। किं पुनः कारणं न सिध्यति। औत्वस्य परत्वात्। परत्वादौत्वं प्राप्नोति। योगविभागात्सिद्धम्। योगविभागः करिष्यते। ङेराम्नद्याम्नीभ्यः। तत इदुद्भ्याम्। इदुद्भ्यामुत्तरस्य ङेः आम् भवतीति। शकट्यां पद्धत्यां धेन्वामिति। तत औ[illegible]। औत्वे योगविभागः कर्तव्यः। औत्। औद्भवतीदुद्भ्याम्। ततः अच्च घेरिति। अकारश्च भवति घेरिति। किमर्थो योगविभागः। सखिपतिभ्यामौत्वार्थः। सखिपतिभ्यामौत्वं यथा स्यात्। सख्यौ पत्यौ। एकयोगे ह्यप्राप्तिरत्वसन्नियोगात्। एकयोगे हि सत्यौत्वस्याप्राप्तिः। किं कारणम्। अत्वसन्नियोगात्। अत्वसन्नियोगे औत्वमुच्यते। तेन यत्रैवात्वं तत्रैवौत्वं स्यात्। न वाकारस्यान्वाचयवचनाद्यथा क्यङि सलोपः। न वार्थ औत्वे योगविभागेन। किं कारणम्। अकारस्यान्वाचयवचनात्। प्रधानशिष्टमौत्वमन्वाचयशिष्टमत्वम्। यथा क्यङि सलोपः। तद्यथा। प्रधानशिष्टः क्यङ् प्रातिपदिकमात्राद्भवति। यत्र च सकारस्तत्र लोपः।

औत्व इति। एकयोगे त्वत्वौत्वयोः सन्नियोगशिष्टत्वाद्यत्रात्वं तत्रौत्वं स्यात्। सख्यौ पत्याविति। असखीति प्रतिषेधात्पतिः समास एवेति नियमाच्चानयोर्नास्ति घिसंज्ञा। अस्त्र्याख्यत्वाच्च नदीसंज्ञा नास्ति। यदा सखिशब्दः स्त्रियां वर्तते तदा सख्यशिश्वीति भाषायामिति ङीषाभावः पतिशब्दस्य तु स्त्रीवृत्तेर्यज्ञसंयोगादन्यत्र ङिति ह्रस्वश्चेति पक्षे नदीसंज्ञेति पत्यामिति भवति। न वेति। अन्वाचयेच शब्दः। इदुद्भ्यां परस्य ङेरौद्भवति। यत्र तु घिसंज्ञास्ति तत्र न स्यात्त्वमिति अत्वानपेक्षमौत्वं प्रधानशिष्टम्॥ ॥

भा॰ कै॰ १२५ अन्त्वदिति। टापि सत्योऽऽङ आप इति शीभावः प्राप्नोति। यदा तत्र सामान्यग्रहणार्थोऽङ्‌कारो वर्णनिर्देशो वा। यदा तु पूर्वाचार्यनिर्देशस्तदा प्र- १३२
थमाद्वितीययोर्द्विवचनयोरेव शीविधानादस्याप्रसङ्गः। अन्येटापि याट्‌प्रसङ्गमाहुः। नवेति। यासेत्यादौ टाबू भवति। त्यदाद्यकारस्याद्विधेरि
ति दोषेषु परिगणनात्। डित्करणादिति। अन्तोदात्तेषु स्वरभेदोऽपि नास्ति। डित्वे उदात्तनिवृत्तिस्वरेणभाव्यम्। अडित्वे त्वेकादेश उदात्तेनो
दात्त इति। ननु डित्वे सत्यपि त्वा विति टिलोपप्रसङ्गः। नैतदस्ति। औतडिश्चघेरिति न्यासः क्रियते। पत्या वै म्यर्यदिति निपातनाद्वाऽयेति-
लोपाभावः। विंशतावित्यत्र ति विंशतेर्डितीति तिलोपो न भवति। न स्तद्धित इति योगविभागात्तद्धित इत्यत्र ति विंशतेर्डितीति न इति चानुवर्त
ते। टेरित्येतत्तु नानुवर्तते। अतद्धितानां डित्करणसामर्थ्यात्। अथवा टेरित्यनुवर्ततां। तथाप्यतद्धितानां डित्करणसामर्थ्यादू यथैवहा

अत्वेटापूप्रतिषेधः। अत्वेटापः प्रतिषेधो वक्तव्यः। शाकटौ। पद्धतौ। धेनौ। अत्वे कृतेऽन इति टापू प्राप्नोति। नवासन्निपातल
क्षणस्यानिमित्तत्वात्। न वा वक्तव्यः। किं कारणम्। सन्निपातलक्षणस्यानिमित्तत्वात्। सन्निपातलक्षणो विधिरनिमि
त्तं तद्विघातस्येति। एवं न भविष्यति। डित्करणाद्वा। अथवा डिदौकारः करिष्यते। आङो ना। किमर्थमस्त्रियामित्युच्य
ते। नाङो नापुंसीत्येवोच्येत। का रूपसिद्धिः। त्रपुणा। जतुना। नुमा सिद्धं नैवं शक्यम्। इह ह्यमुना ब्राह्मणकुलेनेति नुभा
वस्यासिद्धत्वात् नुम् न स्यात्। अस्त्रियामिति पुनरुच्यमानेन दोषो भवति। वक्ष्यत्येतन्नमुटादेश इति। इति श्रीमद्
गवत्पतञ्जलिविरचिते सप्तमस्य तृतीये पादे द्वितीयमाह्निकम्। पादश्च समाप्तः॥

मस्य लोपो भवति एवमतद्धितेष्वपि॥ आङो॥ किमर्थमिति। आङो नापुंसीत्युच्यमाने मात्रालाघवं भवतीष्टं च सिध्यतीति प्रश्नः
॥ नुमेति। इकोचि विभक्तावित्यनेन। अमुनेति। पुंसीत्युच्यमानेन पुंसके नाभावो न स्यात्। नुमपि गलक्षणोमुत्वस्यासिद्धत्वान्नास्ति।
नमुटादेश इति। टाया आदेशष्टायामादेश इत्यनेकविभक्त्यन्तसमासाश्रयेण नाभावे कर्तव्ये नेच परतो दीर्घमुत्वस्यासिद्धत्वादि राम॰
घिलक्षणो नाभावो भवत्यतो दीर्घो यञि सुपि चेति दीर्घत्वं न भवतीति सर्वेष्टसिद्धिः॥ इत्युपाध्यायकैयटकृते महाभाष्यप्रदी- १२५
पे सप्तमस्य तृतीये पादे द्वितीयमाह्निकम्॥ पादश्च तृतीयः समाप्तः॥

णौ चङ्युपधाया ह्रस्वः॥ अथ णिग्रहणमिति। ह्रस्वग्रहणादुपधाग्रहणाच्च चङ्णिपरस्मिन्नेन लोपेऽन्तानां चङि ह्रस्वभागुपधास्ति। ह्रस्वश्रुत्या
त्वचरिभाषोपस्थानाद् चङुपधाया ह्रस्वेन भाव्यम्। न चिद्दुत्सुधेट्प्वीनामनुपधा। कमिगुप्योस्तु ह्रस्व एवोपधा। तत्र णावन्तरङ्गत्वाद् वृद्ध्या
दिषु कृतेषु चङ्युपधा ह्रस्वभाग् नास्तीति सामर्थ्याच्चङि यः प्रत्ययस्तस्मिन्नुपधाया ह्रस्वो विज्ञास्यत इति प्रश्नः। इतरो यथाश्रुतसंभवाच्चङि-
यः प्रत्यय इत्यध्याहारो न युक्त इति वचनादन्तरङ्गमपि वृद्ध्यादि ह्रस्वो बाधेतेति मत्वाह। चङ्युपधाया इति। इतरस्तु चङि यः प्रत्ययस्त-
स्मिन्नुपधाया ह्रस्व इत्यध्याहारेणासूत्रार्थसंभवाद् युक्तान्तरङ्ग बाधेति मत्वाह। वृद्धिरत्रेति। इतरो ह्रस्वस्यानवकाशतां मत्वाह। औकारस्ये
ति। नन्वेवं वृद्धिरनर्थिका स्यात्। एतदेव तर्हि उच्यते वृद्ध्यात्र न भाव्यमभ्युपगम्य तु वृद्धिमुच्यते॥ वृद्धौ तर्हि कृतायामिति। अपवादत्वा द्धि ह्रस्वो वृ
द्धेर्बाधकः आवादेशस्य चेति भावः। इतरो वाक्याध्याहारेण ह्रस्वस्य सावकाशतां मत्वाह। नैतदस्तीति। इतरो यथाश्रुतसंबन्धसंभवाद

णौ चङ्युपधाया ह्रस्वः॥ अथ णिग्रहणं किमर्थम्। न चङ्युपधायाः ह्रस्व इत्येवोच्येत। चङ्युपधाया ह्रस्व इती यत्युच्यमाने
अलीलवत्। अपीपवत्। उकारस्यैव ह्रस्वत्वं प्रसज्येत। नैतदस्ति प्रयोजनम्। वृद्धिरत्र बाधिका भविष्यति। वृद्धौ तर्हि कृता
यामौकारस्यैव ह्रस्वत्वं प्रसज्येत। नैतदस्ति। अन्तरङ्गत्वादत्रावादेशो भविष्यति। नहीदानीं ह्रस्वभाविन्युपधा भवति। तस्मा
ण्णिग्रहणं कर्तव्यम्। अथ चङ्ग्रहणं किमर्थम्। न णावुपधाया इत्येव सिद्धम्। णावुपधाया ह्रस्व इती यत्युच्यमाने कारयती
त्यत्रापि प्रसज्येत।

नवकाशतामेव मत्वाह। नहीदानीमिति। ननु वृद्धिबाधित्वाभवनूकारस्य ह्रस्वस्तस्मिंस्तु कृते बाधितत्वान्माभूद् वृद्धिः। गुणस्तु केन वार्यते। ततो गु
णे वादेशे च सिद्धमलीलवदिति। नैतदस्ति। गुणस्य वृद्ध्या बाधितत्वाद् वृद्धेश्च ह्रस्वेन भ्रष्टावसरस्य गुणस्य कुतः पुनः प्रवृत्तिरिति उवङ् प्रसज्येत। अ
अदीदपदित्यत्र च ह्रस्वेन पुग् बाध्येत। अपीपवदित्यादौ च नैव ह्रस्वः स्यादिति णिग्रहणं क्रियते। यदा चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्तदा
वृद्ध्यावादेशयोः कृतयोः पुकि च णिलोपस्य स्थानिवत्त्वाभावाच्चङि उपधाह्रस्वभाविनी संभवतीति णिग्रहणं न कर्तव्यम्। सूत्रकारेण चङ्
परनिर्ह्रासे स्थानिवत्त्वनिषेधो न कृत इति णिग्रहणं कृतम्। अथेति। मितां ह्रस्व विधानादनेन सर्वत्र ———— णौ ह्रस्वो भवि
ष्यति। प्रयोगदर्शनाच्च व्यवस्थाश्रयितव्येति मत्वा प्रश्नः। इतरो वचनमन्तरेणेष्टानिष्टविभागो दुर्ज्ञान इति मत्वाह। णावुपधाया इति।

अथोपधाग्रहणमिति। न्याय्या नाग्लोपिशास्वृदितामिति निषेधाच्च लिङ्गादुपधाया एव ह्रस्वो भविष्यतीति प्रश्नः। चङ्युपधाग्रहणमिति। असत्युपधाग्रहणेऽचः परिभाषोपस्थानाद् चाङ्गस्य विशेषणाद् अजन्तस्याङ्गस्य ह्रस्वो विधीयमानोऽलोन्त्यस्येत्यन्त्यस्य स्यात्। लूङ् अत इति स्थिते ऋकारस्य ह्रस्वत्वप्रसङ्गः। वृद्धिरत्र बाधिका भविष्यतीति पूर्वं वक्ष्यमाणमत्रानुपपन्नमीयं न्यायव्युत्पत्तये तल्लन्यदभिधातुमाह। नैतदस्तीति। इतरो ह्रस्वं निरवकाशत्वाद् अन्तरङ्गां अपि बाधकं मत्वाह। ननु हीदानीमिति। इतरो विशेषणविशेष्यभावे कामचारादङ्गेनाच्विशेष्यते अङ्गस्य यत्रान्त्यस्थितस्याचो ह्रस्वो भवतीत्येवं विध्यन्तराण्यपि न बाधितानि भवन्ति। ह्रस्वस्यसावकाशो भवतीति मत्वाह। अन्त्यो ह्रस्वभावीति। अङ्गस्येत्वं

नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति। नणवेव ह्रस्वत्वं भवतीति। यदयं मितां ह्रस्वत्वं शास्ति। इहापि तर्हि न प्राप्नोति। अचीकरत् अजीहरत्। वचनाद्भविष्यति। इहापि तर्हि वचनात्प्राप्नोति। कारयति हारयति। तस्माच्चङ्ग्रहणं कर्तव्यम्। अथोपधाग्रहणं किमर्थम्। णौ चङ्युपधाग्रहणमन्त्यप्रतिषेधार्थम्। णौ चङ्युपधाग्रहणं क्रियते। अन्त्यस्य ह्रस्वत्वं मा भूत्। णौ चङि ह्रस्व इतीयत्युच्यमाने अचीकरत्। अपीपवत्। अन्त्यस्यैव ह्रस्वत्वं प्रसज्येत। नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्र वृद्धिर्भविष्यति। ननु हीदानीं ह्रस्वभाव्यस्ति। अन्त्यो ह्रस्वभावी नास्तीति कृत्वा वचनादन्त्यस्य भविष्यति। इहापि वचनात्प्राप्नोति। अचकाङ्क्षत् अववाङ्क्षत्। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्। केन च नाव्यवधानम्। वर्णेनैकेन। एतेन पुनः सङ्घातेन व्यवधानं भवति च न भवति च। उत्तरार्थं तर्ह्युपधाग्रहणं कर्तव्यम्। लोपः पिबतेरीच्चाभ्यासस्य उपधाया यथा स्यात्।

ति चावयवषष्ठीविज्ञानाद् अलोन्त्यस्येत्यस्योपस्थानाभावः। येन नाव्यवधानमिति। तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्येन शब्देन अवश्यं व्यवधानं तेन व्यवहितेऽपि कार्यं विज्ञायमानमन्यव्यवधाने न प्रवर्तत इत्यज्भ्यां ह्यच्विशेष्यते णौ परतोऽङ्गस्य योऽजिति सामर्थ्यादेकवर्णव्यवधानमवश्यंभावित्वादाश्रीयते। एकस्मिंस्तु विषयेऽन्त्यसदेशोऽसदेशयोर्ह्रस्वभाविनोरसंभवादनन्त्यविकारेऽन्त्यसदेशस्यैव ग्रहणमिति परिहारो नोक्तः। (नन्त्य)

अपीप्यदिति। अतोन्त्यस्येति युक्तो लोपप्रसङ्गः पुनरर्थमुपधाग्रहणम्। ननु ह्रस्वापवादो लोपो विज्ञायमान उत्सर्गदेशत्वादपवादानामुपधाया एव भविष्यति। नैतदस्ति। ह्रस्वश्रुत्या परिभाषोपस्थानादङ्गे नचाचो विशेषणाद्युक्तं यदुपधाह्रस्वः स्यात्। लोपविधौ तु पिबतेरिति स्थानषष्ठ्या अन्येऽल्युपसंहारात्। अन्त्यस्यैव लोपः स्यात्। भिन्नदेशावप्युत्सर्गापवादौ दृश्येते यथा शपुन्नमौ काकचौ सत्यपि संभवे बाधनं भवतीति न्यायाद्भिन्नदेशोऽप्यपवाद उत्सर्गं बाधते। यदि तर्हि पुनरर्थमुपधाग्रहणं तत्रैव वक्तव्यमाल्लोपः पिबतेरीच्चाभ्या-

अपीप्यत्। अपीप्यताम्। अपीप्यन्। अथेह कथं भवितव्यम्। मा भवानटिटत्। आहोस्विन्मा भवानटीटदिति। मा भवानटिटदिति भवितव्यम्। ह्रस्वत्वं कस्मान्न भवति। द्विर्वचने कृते परेण रूपेण व्यवहितमिति कृत्वा। इदमिह संप्रधार्यं द्विर्वचनं क्रियतां ह्रस्वत्वमिति। किमत्र कर्तव्यम्। परत्वाद्ध्रस्वत्वम्। नित्यत्वाद्द्विर्वचनम्। कृतेऽपि ह्रस्वत्वे प्राप्नोत्यकृतेऽपि। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति। द्विर्वचनाद्ध्रस्वत्वं बलीय इति। यदयमोणिमृदितं करोति। कथं कृत्वा ज्ञापकम्। ऋदित्करण एतत्प्रयोजनमृदितां नेति प्रतिषेधो यथा स्यात्। यदि चात्र पूर्वं द्विर्वचनं स्यादृदित्करणमनर्थकं स्यात्। द्विर्वचने कृते परेणाव्यवहितत्वाद्ध्रस्वत्वं न भविष्यति। पश्यति त्वाचार्यो द्विर्वचनाद्ध्रस्वत्वं बलीय इति तत ओणिमृदितं करोति। तस्मान्मा भवानटिटदिति भवि---तव्यम्। उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम्। उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानं कर्तव्यम्। वादितवन्तं प्रयोजितवान्। अवीवदद्वीणां परिवादकेन। किं पुनः कारणं न सिध्यति। णिचा व्यवहितत्वात्। णिलोपे कृते नास्ति व्यवधानम्। स्थानिवद्भावाद्व्यवधानमेव। प्रतिषिध्यते स्थानिवद्भावः। चङ्परनिर्ह्रासे न स्थानिवदिति। एवमप्यग्लोपिनां नेति प्रतिषेधः प्राप्नोति। वृद्धौ कृतायां लोपः। तन्नाग्लोप्यङ्गं भवति। इदमिह संप्रधार्यं वृद्धिः क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वाद्वृद्धिः। नित्यो लोपः। कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि। अनित्यो लोपोऽन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याकृतायाम्। शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। उभयोरनित्ययोः परत्वाद्वृद्धिः। वृद्धौ कृतायां लोपः। तन्नाग्लोप्यङ्गं भवति।

सस्येति। नैतदस्ति। अन्तरङ्गमपि युक्तमनवकाशत्वाद्धाह्लोपो बाधेत उपधाग्रहणेनान्तरङ्गत्वाद्युक्ति कृते आकारस्योपधाया लोप इति न कश्चिद्दोषः। अथेहेति। न्यायप्रयोगविरोधात्प्रश्नः। स एव प्रष्टा न्यायान्वयेनाह। मा भवानटिटदित्येवमिति। इतरोऽवस्थमाणलिङ्गाद्दृष्टं मे न एतद्दृति। ह्रस्वत्वं कस्मान्न भवतीति। एवं तर्हीति। ज्ञापकात्पूर्वं ह्रस्वः पश्चाद्द्विर्वचनमिति क्रमः। कृतायामपीति। स्थानिवद्भावात्।

 एवं तर्हीति। सर्वत्राको वृद्धौ कृतायामैकारौकारयोर्लोपो न त्वकः। अत्यरराजदिति। राजानमतिक्रान्तवानिति प्रातिपदिकाद्धात्वर्थ इति णि 
चि कृतेऽत उपधाया इति वृद्धौ कृतायामगेव लुप्यते। यत्तर्हीति। प्रत्याहारग्रहणाद्धि ज्ञापकात्पूर्वविप्रतिषेधेन लोपो भवति। ननु प्रत्याहा
रग्रहणं स्वामिनमाख्यदसस्वामत्। गोमिनमाख्यदजुगोमदित्यादौ वृद्धिप्रसङ्गाभावाल्लोपे ह्रस्वनिषेधार्थं स्यादिति कथं ज्ञापकमि
ति चिन्त्यमेतत्। अत्राहुः। अनभिधानाण्णिजत्र नास्तीति भाष्यकारस्याभिप्रायः। एवं तु ज्ञापकेन लोपस्य बलीयस्त्वे यदुक्तं हलिक
ल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति तद्विरुध्यते असत्यपि अत्वनिपातने वृद्धिं बाधित्वेकारस्य लोपे सति सन्वद्भावस्या
प्रसङ्गादनाश्रित्य ज्ञापकत्वमत्वनिपातनमुक्तम्। ज्ञापकाश्रयणं तु ज्यायः। पटुमाख्यदपपटदित्यादावकृतायां वृद्धौ लोपे सति

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति वृद्धेर्लोपो बलीयानिति। यदयमग्लोपिनां नेति निषेधं शास्ति नैतदस्ति ज्ञापकम्। अस्त्यन्य
देतस्य वचने प्रयोजनम्। किम्। यत्र वृद्धावपि कृतायामगेव लुप्यते। अत्यरराजत्। यत्तर्हि प्रत्याहारग्रहणं करोति इतरथा ह्य
ल्लोपिनां नेति ब्रूयात्। एवं तर्हि वृद्धेर्लोपो बलीयानिति। अथ वा आरभ्यते पूर्वविप्रतिषेधः। एयल्लोपावियङ्यण्गुणवृद्धि
दीर्घेभ्यः पूर्वविप्रतिषिद्धम् इति। तस्मादुपसंख्यानं कर्तव्यमिति॥ नाग्लो॥ अग्लोपिप्रतिषेधानर्थक्यं च स्थानिवद्भावात्। अग्लो
पिप्रतिषेधोऽनर्थकः। किं कारणम्। स्थानिवद्भावात्। स्थानिवद्भावादत्र ह्रस्वत्वं न भविष्यति। यत्र तर्हि स्थानिवद्भावो
नास्ति तदर्थमयं योगो वक्तव्यः।

सन्वद्भावस्य प्रसङ्गाभावार्थम्। अथ वेति। हलिकल्योरत्वनिपातनमेव ज्ञापकं लोपात्पूर्वं वृद्धिर्भवतीति। णिलोपस्तु वाचनिकेन पूर्वविप्रतिषे
धेन वृद्धेः पूर्वं भवति। एवं पटुमाख्यदपीपटदिति सन्वद्भावप्रसङ्गात्प्रत्याहारग्रहणमेव ज्ञापकमाश्रयणीयं तेन वृद्धेः प्राग्लोपो विधेयः॥ ना
ग्लो॥ अग्लोपीति। मालामाख्यदममालदित्यादौ टिलोपस्य स्थानिवत्त्वादनुपधात्वात्प्राप्तिरेव ह्रस्वस्य नास्तीति प्रतिषेधोऽनर्थकः। ननु प्रति 
षिध्यते तत्र स्थानिवत्त्वं किलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति। नैतदस्ति। यदर्थः स प्रतिषेधः तस्य णौ णिच्युपसंख्यानमित्यनेन साधित 
त्वान्न वक्तव्यः। ॥

हलचोरादेशइति। यथासुधातुरकङ्चेत्यादेशेसमुदायेअवयवस्यानादेशत्वादणोरपरत्वंनभवतिसौधातकिरिति। तथासमुदायेस्थानिन्यवयवस्यास्थानित्वादजादेशत्वाभावान्नास्तिस्थानिवद्भावः। किंपुनरिति। अवयवात्मकत्वात्समुदायस्यतस्मिन्स्थानिन्यवयवानामपिस्थानित्वादजादेशत्वादन्याय्यएवस्थानिवद्भावः। तथाचखट्वर्श्यइतिऋकारस्थानिकत्वात्प्रथमणोरपरत्वंभवतीतिभावः। इतरःपूर्वोक्तेनैवाभिप्रायेणाह। अजादेशइति। इतरस्त्वनुमीयमानोऽवश्याश्रयितव्यःस्थान्यादेशभावइतिमत्वाह। अग्लोपिनामिति। इतउत्तरमिति। पञ्चपाद्यामित्यर्थः। पूर्वत्रासिद्धइति। तस्यदोषःसंयोगादिलोपलत्वणत्वेष्वितिवक्तव्यमेव। यद्वाज्ञापकज्ञापिताविधयोऽनित्याइतिसंयोगादिलोपलत्वणत्वेषुस्थानिवद्भावोभवत्येव। अचःपरस्मिन्नित्यत्रविचारितंहलचोरादेशःस्थानिवदितिचेद्धिंशानेस्तिलोपएकादेशइत्यादितत्रनिर्णीतम्। हलचोरादेशोनस्थानिवदिति। इहतुप्रतिषेधवचनमर्थान्तरज्ञापनायोक्तमितिग्रन्थविरोधस्तस्मादन्याय्याश्रयेण

वाचस्थानिवद्भावोनास्तियोहलचोरादेशः। अत्यरराजत्। किंपुनःकारणम्। हलचोरादेशोनस्थानिवदित्युच्यते। अजादेशःस्थानिवदित्युच्यते। नचायमचएवादेशः। किंतर्ह्यचश्चान्यस्यच। अग्लोपिनांनेत्यपितर्हिप्रतिषेधोनप्राप्नोति। किंकारणम्। अग्लोपिनांनेत्युच्यते। नचात्रागेवलुप्यते। किंतर्ह्यक्चान्यश्च। योत्राग्लुप्यतेनतदाश्रयःप्रतिषेधोभविष्यति। यद्येवंतर्हियोत्राग्लुप्यतेतदाश्रयःप्रतिषेधोभवति। एवंयोत्राग्लुप्यतेतदाश्रयःस्थानिवद्भावोभविष्यति। एवंतर्हिसिद्धेसतियदग्लोपिनांनेतिप्रतिषेधंशास्तितज्ज्ञापयत्याचार्यः। इतउत्तरंस्थानिवद्भावोनभवतीति। किमेतस्यज्ञापनेप्रयोजनम्। पूर्वत्रासिद्धेनस्थानिवदित्युक्तम्। तन्नवक्तव्यंभवति। यदेतज्ज्ञाप्यतेआदीधयतेः। आदीधकः। आवेवयतेः। आवेवकः। यीवर्णयोर्दीधीवेव्योरितिलोपोनप्राप्नोति।

हलचोरादेशोनस्थानिवदित्ययंपक्षोग्राह्यः। इहत्वभ्युपेत्यस्थानिवत्त्वंज्ञापकत्वमाश्रितम्। शिष्यबुद्धिव्युत्पादनायाऽस्थितोऽपिपक्षःक्वचिदुपन्यस्यतइत्येवंविरोधःपरिहार्यः। अग्लोपिग्रहणसामर्थ्याच्चसमुदायलोपेऽप्यग्लोपआश्रीयतेकेवलाग्लोपेप्रतिषेधस्यानर्थक्यात्। खट्वर्श्यइत्यत्रत्वेकःपूर्वपरयोरित्यवयवावेवशब्देनचोदितावितिरपरत्वंप्रवर्तते। तदुक्तम्। योह्युभयोःषष्ठीनिर्दिष्टयोःस्थानीभवतिलभतेऽसावन्यतरव्यपदेशमिति। आदीधकइति। दीधीणिचूदीधीवेवीटामितिगुणवृद्धिप्रतिषेधस्ततोण्वुलिणिलोपेकृतेतस्यस्थानिवद्भावाभावाद्यीवर्णयोरितिलोपोनप्राप्नोति। यद्यप्यन्तरङ्गत्वाल्लोपःसिध्यतितथापिवर्णग्रहणस्यानन्यार्थस्यप्रयोजनाख्यानायोपक्षेपः। ॥

भा॰ कौ॰ यत्प्रलुनीह्यत्रेति। तिङ् तिङ इति निघातो निपातैर्यद्यदीति निषिद्धः। हेरपित्वादाद्युदात्तत्वान्न विकरणस्वरेण सार्वधातुकस्वरं बाधत इति प्रा ७४१
२९८ स्वराभावस्तत्र यणादेशे कृते उदात्तत्वाभावात्स्थानिवत्त्वाभावाच्च निघातो न प्राप्नोति। वर्णग्रहणसामर्थ्यादिति। वर्णग्रहणं कृतपूर्वं गतिप्र
श्रीयते। अन्तरङ्गत्वात्तु लोपे सिद्धे वर्णग्रहणं शक्यमकर्तुम्। ननु केचिद्ज्ञापकं वर्णयन्ति। उत्तरत्र स्थानिवत्त्वाभावस्याग्लोपिग्रहणं तु स
तिप्रयोजनेन ज्ञापकमस्यार्थस्य। अन्तरङ्गः स्वर इति। यद्यप्युभयं पदद्वयाश्रयं तथापि पूर्वमुपसर्गेण सम्बन्धः। पश्चादधिकरणवाचि
नात्र शब्देनेति यणादेशो बहिरङ्गः। भ्राजा। काण्यादीनां वेति। आदिशब्दः प्रकारे येषां ह्रस्वविकल्पो दृश्यते ते काण्यादयः। काणि भ्राणि राणि

इह च यत्प्रलुनीह्यत्र। तिङि चोदात्तवतीत्येष स्वरेण न प्राप्नोति। नैष दोषः। यत्तावदुच्यते। आदीधयतेः। आदीधकः। आवे
वयतेः। आवेवकः। यीवर्णयोरिति लोपो न प्राप्नोतीति। यीवर्णयोरित्यत्र वर्णग्रहणसामर्थ्याद्भविष्यति। यदप्युच्यते यत्प्र
लुनीह्यत्र तिङि चोदात्तवतीत्येष स्वरेण न प्राप्नोतीति बहिरङ्गो यणादेशः। अन्तरङ्गः स्वरः। असिद्धं बहिरङ्गमन्तरङ्गे।
भ्राजा। काण्यादीनां वेति वक्तव्यम्। के पुनः काण्यादयः। काणि राणि भ्राणि भाणि हेठि लेठयः। अचकाणत्। अचीकणत्।
अरराणत्। अरीरणत्। अबभ्राणत्। अबभाणत्। अबीभणत्। अजीहिठत्। अजिहेठत्। अलुलोपत्। अलूलुपत्।
॥दय॥ इहावदिग्येऽवदिग्यातेऽवदिग्यिरे। दिग्यादेशे कृते द्विर्वचनं प्राप्नोति। तत्र साभ्यासस्येति वक्तव्यम्। ननु
च द्विर्वचने कृते साभ्यासस्य दिग्यादेशो भविष्यति।

हेठि लेठि प्रभृतयः॥ दय॥ दिग्यादेशे कृत इति। यद्यपि प्राप्ते द्विर्वचने दिग्यादेश आरभ्यते तथापि बाध्यबाधकभावे द्वैतं लक्षणं वा लक्षणेन बाध्य
ते लक्ष्यं वा। तत्र यदा द्विर्वचनशास्त्रं दिग्यादेशशास्त्रेण बाध्यते तदा दिग्यादेशे कृते नास्ति द्विर्वचनप्रसङ्गः। यदा तु लक्ष्यं बाध्यते तस्य द्विर्वचनं-
दिगि नाबाध्यते दिगेस्तु तत्प्राप्नोति शास्त्रस्याबाधितत्वात्। ततश्च यथा चख्यावित्यादौ ख्याञादेशे कृते द्विर्वचनं भवति। एवं दिग्यादेशे कृते प्राप्नो रामः
ति। साभ्यासस्येति। तेन कृते द्विर्वचने दिग्यादेशो न पुनर्द्विर्वचनं भवति सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्साभ्यासग्रहणसामर्थ्याच्च। ननु चेति ॥ १२८
। पूर्वविप्रतिषेधाद्धल्यसिद्धये दृष्टक्रमाश्रयणादिति भावः।

नसिध्यतीति। विप्रतिषेधे परं कार्यमित्यस्मिन्नुव्यवस्थाहेतौ सत्येव क्रमो दुर्लभः। तत्र द्विर्वचनस्य सावकाशः पपाचेति। कृते द्विर्वचने दयतिसद्भावाद्दि
ग्यादेशस्य। अकृते तु द्विर्वचने तूभयप्रसङ्गे परत्वाद्दिग्यादेशः। एवं तर्हीति। नाप्राप्ते द्विर्वचने दिग्यादेशस्यारम्भात्। इतरस्तु बुद्धिपरीक्षार्थं विप्र
तिषेधाश्रयेण सकृद्गतावित्येवं दिग्यादेशो द्विर्वचनस्यान्यथाबाधक उक्त इत्यारोप्य कथयति। पुनःप्रसङ्गविज्ञानादिति। इतरोऽप्यभ्युपगम्य ताव
द्विप्रतिषेधं सकृद्गताविप्याश्रित्याह। पुनःप्रसङ्गादिति चेदिति। यथा यूयं ब्राह्मणकुलानि युयुं त्वमित्यमादेशे कृते शिशीलुको न भवन्ति। दि
ग्यादेशे कृते द्विर्वचनाभावः। इदानीं न्याय्यं परिहारमाह। अथ वेति। कचित्पाठो नैव युक्तः परिहारो विप्रतिषेधे पुनःप्रसङ्ग इति। योऽयमनुक्ता
र्थस्य दिग्यादेशो द्विर्वचनं बाधिष्यत इत्युक्तस्यान्यथापरिहारोऽभिहितः पुनःप्रसङ्गविज्ञानाद्द्विर्वचनं प्राप्नोतीति स न युक्त इत्यर्थः। अनवका

नसिध्यति। किं कारणम्। दिग्यादेशस्य परत्वात्साभ्यासस्यादेशवचनम्। दिग्यादेशः क्रियतां द्विर्वचनमिति। परत्वाद्दि
ग्यादेशेन भवितव्यम्। तत्र साभ्यासस्येति वक्तव्यम्। एवं तर्हि दिग्यादेशो द्विर्वचनं बाधिष्यते। पुनःप्रसङ्गविज्ञानाद्द्विर्वचनं
प्राप्नोति। पुनःप्रसङ्गविज्ञानादिति चेदमादिभिस्तुल्यम्। पुनःप्रसङ्गविज्ञानादिति चेदमादिभिस्तुल्यमेतद्भवति। तद्यथा अ
मादिषु कृतेषु पुनःप्रसङ्गाच्छिशीलुङ्नुमो न भवन्ति। एवं दिग्यादेशे कृते पुनःप्रसङ्गाद्द्विर्वचनं न भविष्यति। अथ वा विप्रति
षेधे पुनःप्रसङ्ग इत्युच्यते। विप्रतिषेधश्च द्वयोः सावकाशयोः। इह पुनरनवकाशो दिग्यादेशो द्विर्वचनं बाधिष्यते। यदि तर्ह्यन
वकाशा विधयो बाधका भवन्ति। बभूव। भूभावो द्विर्वचनं बाधेत। सावकाशो भूरादेशः। कोऽवकाशः। भविता। भवितुम्। इह
तर्हि चक्षिङः ख्याञ् वा लिटीति ख्याञ् द्विर्वचनं बाधेत।

शो दिग्यादेश इति। पूर्वं सामान्यविशेषभावमनाश्रित्योभयोः सावकाशत्वमुक्तम्। इदानीं तु सामान्यविशेषाश्रयेण नाप्राप्ते द्विर्वचने आरभ्यमा-
णस्य दिग्यादेशस्यापवादत्वमुच्यते। यदि तर्हीति। नन्ववश्यमनवकाशेन बाधकेन भाव्यम्। अन्यथा न कश्चिद्बाधकः स्यात्। एवं तर्ह्यनवका-
शानिमता अनवकाशादित्यर्थो विवक्षितो न नैवायमनवकाशः कृतेऽपि द्विर्वचने प्रवृत्त्यविघातात्। अथ पुनरेवमप्यनवकाशत्वं मन्यसे तत्-
दा लक्ष्यदोषप्रसङ्गः। बभूवेति। अस्तेर्भूरिति भूभावः। सावकाश इति। यत्र द्विर्वचनाभावः। इह तर्हीति। आचख्याविति अत्र कृतेऽपि द्विर्वचने
ख्याञः प्रवर्तनादनवकाशत्वाभावो यदा तु येन नाप्राप्तिन्यायेनानवकाशत्वमभ्युपगम्यते तदा ख्याञि कृते द्विर्वचनाप्रसङ्गः। ॥

भा॰कै॰ सर्वादेश इति। स्थानिवद्भावादलिग्रहणेन ग्रहणात्कार्यकृतत्वाच्च पुनर्द्विर्वचनाभावादिष्टरूपासिद्धिः। पूर्वस्य अवर्णमिति। अयं दोषो नोत्स- ७ ४१
१२९ र्गापवादपक्ष उपात्तो भूभावस्यावकाशदर्शने नोत्सर्गापवादभावनिराकरणात्। द्वयोस्तु सावकाशयोः परत्वाद्द्विर्वचने कृते बभूवेति न सि-
ध्यतीति प्रतिपाद्यते। न त्वार्धधातुकसामान्य इति। द्विर्वचननिमित्तस्य लिटोऽनुपजातत्वादसति विप्रतिषेधे पूर्वं भूभावः पश्चाल्लिटि परतो द्वि-
र्वचनमित्यदोषः। यो यतः प्राप्नोतीति। विषयसप्तमीफलं त्वापितं स्यात् तु विधावपि विषयसप्तम्याश्रीयत इति येन नाप्राप्ते इत्यस्य न्याय-
स्यानवतारात् कृते स्यात् विद्विर्वचनं भवत्येव दिग्यादेशे तु लिटीति परसप्तम्याश्रयणान्नाप्राप्ते द्विर्वचने दिगि आरभ्यमाणस्तं बाधते॥ कृते

इह चापि बभूवेति। यदि तावत्स्थाने द्विर्वचनम्। भूभावः सर्वादेशः प्राप्नोति। अथ द्विःप्रयोगो द्विर्वचनम्। परस्य भूभा-
वे कृते पूर्वस्य अवर्णं प्राप्नोति। नैष दोषः। आर्धधातुकीयाः सामान्येन भवन्ति। अनवस्थितेषु प्रत्ययेषु। तत्रार्धधातुक-
सामान्ये भूभावे कृते यो यतः प्राप्नोति स ततो भविष्यति। ऋतश्च संयोगादेर्गुणः॥ संयोगादेर्गुणविधाने संयोगोपधग्रह-
णं कृञर्थम्। संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यम्। किमर्थम्। कृञर्थम्। इहापि यथा स्यात्। संचस्कर-
तुः संचस्करुः। यदि संयोगोपधग्रहणं क्रियते नार्थः संयोगादिग्रहणेन। इहापि सस्वरतुः सस्वरुः। संयोगोपधस्येत्येव
सिद्धम्। भवेत्सिद्धम्। सस्वरतुः सस्वरुरिति। इदं तु न सिध्यति संचस्करतुः संचस्करुरिति। किं कारणम्। सुटो बहिरङ्गल-
क्षणत्वात्। बहिरङ्गः सुडन्तरङ्गो गुणः। असिद्धं बहिरङ्गमन्तरङ्गे। संयोगादिग्रहणे तु क्रियमाणे संयोगोपधग्र-
हणमनन्यार्थं विज्ञायते। ऋतो लिटि गुणादृन्शोहृद्विर्विप्रतिषेधेन।

श्च संयोगादेरिति। इहाङ्गाधिकारादङ्गं संयोगाद्याश्रीयते न च स्कृ इत्येतदङ्गं संयोगादि भवतीति भावः। उपधाग्रहणं संयोगस्यादेशवि-
शेषोपलक्षणमल्मात्रस्योपधासंज्ञाविधानात् संयोगस्योपधात्वासंभवात्। अथवा संयोगावयवे संयोगशब्दो वर्तते तेन स्योपधात्वमस्त्ये-
व बहिरङ्ग सुडिति। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण। साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि न चासिद्धस्य विशेष- राम:
णेन संबन्धो भवति सुट्कात्पूर्व इत्यत्र तूक्तं पूर्वं धातुरुपसर्गेण युज्यते इत्येवं च सुटोऽन्तरङ्गत्वात्सिद्धो गुणाद् इति नार्थ उपसंख्यानेन संस्क- १२९
षीष्ट संस्क्रियत इत्यत्र त्विड्गुणयोः प्रतिविधेयम्। अनन्यार्थमिति। कृञर्थमेवेत्यर्थः। तत्र वचनादसिद्धत्वं बाध्यते। यथान्यत्रोक्तमाश्र-
यात्सिद्धत्वं यथारोहत्व इति। ॥

पुनःप्रसङ्गविज्ञानाद्वेति। अस्तु परविप्रतिषेधेन गुणस्तस्मिन्कृते वृद्धिर्भविष्यति। अनाश्रित्य लक्षणमिदं च वृद्धिमात्रमेकत्वेनाश्रित्यैतदुक्तम्। पुनःप्रसङ्गो नामेति। वाचोयुक्तिरेवेयं न संगच्छते लक्षणद्वयस्य परस्परप्रतिषेधादप्रवृत्तौ प्राप्तायां विप्रतिषेधे परं कार्यमित्यनेन परस्मिन्कार्ये विहिते निमित्तसंभवात्पूर्वस्य लक्षणस्य पुनःप्राप्तिः पुनःप्रसङ्ग उच्यते न तु पूर्वलक्षणप्राप्तिः पुनःप्रसङ्गः। तस्मादिति। ननु यदि नाम पुनःप्रसङ्गवाचोयुक्तिर्न घटते किमेतावता गुणरपरत्वयोः कृतयोरुपधावृद्धिर्न हि न प्राप्नोति सत्यां च प्राप्तौ किं पूर्वविप्रतिषेधाश्रयणेनेत्यत्र चिन्त्यमेतत्।ऽऽस्तृ हृ॥ न गुणो वेत्युच्येतेति। गुण एव पूर्वसूत्रेण नित्यं प्राप्तो विकल्पनीयस्तत्र गुणपक्षे विशशरतुरित्यादि

ऋतो लिटि गुणाद्ञ्णिति वृद्धिर्भवति पूर्वविप्रतिषेधेन। ऋतो लिटि गुणस्यावकाशः सस्वरतुः सस्वरुः। ञ्णिति वृद्धेरवकाशः स्तारकः ध्वारकः। इहोभयं प्राप्नोति सस्वार दध्वार। ञ्णिति वृद्धिर्भवति पूर्वविप्रतिषेधेन। पुनःप्रसङ्गविज्ञानाद्वा सिद्धम्। अथवा पुनःप्रसङ्गाद्गुणे कृते रपरत्वे चात उपधाया इति वृद्धिर्भविष्यति। नैष युक्तः परिहारः पुनःप्रसङ्गो नाम स भवति यत्र तेनैव कृते प्राप्नोति तेनैव चाकृते। अत्र खलु गुणे कृते रपरत्वे चात उपधाया इति वृद्धिः प्राप्नोति। अकृते चाचो ञ्णितीति तस्मात्सूच्यते ऋतो लिटि गुणाद्ञ्णिद्वृद्धिः पूर्वविप्रतिषेधेनेति। शॄदॄप्रां ह्रस्वो वा॥ किमर्थं ह्रस्वो वेत्युच्यते। न गुणो वेत्युच्येत तत्रायमप्यर्थः। गुणग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते। क्व प्रकृतम्। ऋतश्च संयोगादेर्गुण इति। ऋतो ह्रस्वत्वमित्वप्रतिषेधार्थम्। ऋतो ह्रस्वत्वमुच्यते। इत्वप्रतिषेधार्थमित्वं मा भूदिति गुणो वेतीयत्युच्यमाने गुणेन मुक्ते इत्वं प्रसज्येत ह्रस्वो वेति पुनरुच्यमाने ह्रस्वत्वेन मुक्ते यथाप्राप्तं गुणो भविष्यति।

भविष्यतीति। तदभावपक्षे तु यणादेशेन विशश्रतुरित्यादीति भावः। तत्रायमपीति न केवलं गुणविधानप्रकरणमनुसृतं भवति। यावत्ता घवमपीत्यर्थः। इत्वं प्रसज्येतेति। वार्णादाङ्गं बलीय इति वर्णाश्रयमन्तरङ्गमपि यणं बाधित्वेत्वं स्याद्ध्रस्वविधाने तु यणादेशः सिध्यति। विशश्र्वान् विदद्र्वान् विपप्र्वानिति क्वसौ च सिध्यति गुणविकल्पे त्वेतद्रूपासिद्धिः। क्वसोः कित्त्वेन प्रतिषेधविषयस्यापि गुणस्य प्रतिषेधः प्रदेशान्तरे भाष्यकृता प्रदर्शितः। उत्तरार्थं च ह्रस्वग्रहणं कर्तव्यमिति लाघवमपि नास्ति ह्रस्वविधावपि उत्तरत्र ह्रस्वविधानादेकप्रकरणता भवतीति नास्ति पूर्वोक्तो विशेषः। ॥

उपसर्गात्॥ प्रोह्यत इति। अकृते एकादेशे ह्रस्वभावाभावयोर्विशेषाभावादन्तरङ्गत्वाच्च प्रागेकादेशेन भाव्यम्। वार्णादाङ्गमित्येतत्तु समाना- 
श्रयाङ्गवार्णविषयं तस्मादेकादेशे कृतेऽन्तादिवद्भावेन ह्रस्वप्रसङ्गः प्रोह्यते। एकादेशे कृत इति। उपसर्गात्परस्योह्यते ह्रस्वो विधीयमान ए-
कादेशे कृते भेदाभावाद्भेदनिबन्धनपौर्वापर्यानुपपत्त्योभयत आश्रये अन्तादिवद्भावाभावाच्च ह्रस्वत्वाभावः। आऊह्यत इति। धातूपसर्-
गयोः संहिता नास्ति। तदुक्तम्। संहितैकपदे नित्या नित्या धातूपसर्गयोरिति। एवं च लौकिके प्रयोगे विग्रहाभावान्नित्यैकादेशेन भाव्यम्
। एवं च आऊह्यत इति ये ह्रस्वं पठन्ति ते न सम्यग्न्यायविदः लौकिकप्रयोगसंपादनाय हि ह्रस्वो विधीयते। तस्माल्लौकिकेन प्रक्रियावा-

केणः॥ केणो ह्रस्वत्वे तद्धितग्रहणं कर्त्तव्यम्। केणो ह्रस्वत्वे तद्धितग्रहणं कर्तव्यम्। किं प्रयोजनम्। कृन्निवृत्त्यर्थ-
म्। कृति मा भूद्दुराका। धाकाइति। न तर्हि वक्तव्यम्। न वक्तव्यम्। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि॥ उप॥ इह
कस्मान्न भवति। प्रोह्यते। उपोह्यते। एकादेशे कृते व्यपवर्गाभावात्। एवमपि आऊह्यते ओह्यते समोह्यत इत्यत्र प्रा-
प्नोति। अण इति वर्त्तते॥ एतेः॥ एतेर्लिङ्युपसर्गात्। एतेर्लिङ्युपसर्गादिति वक्तव्यम्। इह मा भूत्। ईयात्। न तर्हि व-
क्तव्यम्। न वक्तव्यम्। उपसर्गादिति वर्त्तते। एवं तर्ह्याचार्योन्वाचष्टे। उपसर्गादित्यनुवर्त्तत इति। नैतदन्वाख्येयमधि-
अ कारा अनुवर्त्तन्त इति। एष एव न्यायो यदुताधिकारा अनुवर्त्तेरन्। रीङृतः॥ दीर्घोच्चारणं किमर्थम्। न रिङृत इत्येवोच्येत।
का रूपसिद्धिः। मात्रीयति पित्रीयति। अकृत्सार्वधातुकयोरिति दीर्घत्वं भविष्यति। एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं
करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाऽङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति।

कयेनाकृतह्रस्वेनाङ्गाप्रश्लेषप्रदर्शनमात्रं क्रियते। अथवा लौकिके प्रक्रियावाक्ये ह्रस्वत्वप्रतिपत्तिरुच्यते। तथापि न काचित्क्षतिः सत्ये-
कादेशस्यादिवद्भावादुहिग्रहणेन ग्रहणात्तस्मात्परस्य ह्रस्वत्वप्रसङ्गः। अण इति वर्त्तत इति। एवं च रूपाश्रयोयं विधिरिति ताद्रूप्यान-
तिदेशादण्त्वाभावाद्ध्रस्वाभावः॥ एतेः॥ ईयादिति। आशिषि लिङ्। अकृत्सार्वधातुकयोर्दीर्घः। नैतदन्वाख्येयमिति वार्त्तिककारेणैत- 
दन्वाख्येयं सर्वाधिकाराणामन्वाख्यानप्रसङ्गादिति कारस्त्वधिकाराणां प्रवृत्तिनिवृत्ती व्याचष्टे॥ रीङृतः॥ दीर्घत्वं भविष्यतीति। ननु- 
नाप्राप्ते दीर्घे रीङारभ्यमाणस्तस्य बाधकः स्यात्। नैतदस्ति। ऋवर्णस्य बाध्यतां रीङ् लुकथं बाध्यते न हि तस्य दीर्घे प्राप्ते स आरभ्यते तत-
श्च द्व्यचे परे यिरिङि कृते दीर्घः प्रवर्त्तत एव॥

यङि च॥ यङ्प्रकरणादिति। हिंसायास्त्वन्यत्र जङ्घन्यत इत्येव भवति। अभ्यासरूपं न सिध्यतीति। उपधालोपस्य स्थानिवत्त्वाद्द्विर्वचनं न प्राप्नोति। एवं तर्हीति। ईकोधातुभक्तत्वाद्द्विर्वचननिमित्तत्वाभावात्स्थानिवत्त्वाभावात्। एवमपीति। अजादौ प्रत्यये विधानात्। एवं तर्हीति। प्रक्रियालाघवाय घकारस्यादेशविधानाद्घ्नीभावविधावभ्यासाच्चेति कुत्वे गौरवप्रसङ्गात्। व्यक्तिपदार्थाश्रयणे च घ्नीभावे कृते द्विर्वचनं प्रवर्तते। आकृतिपक्षे तु हिंस्यादेशेनेव घ्नीभावेन द्विर्वचनबाधप्रसङ्गात्। नच्छन्दस्य॥ जनीयन्त इति। जनमिच्छन्तीति क्यच्। लटः शत्रादेशः। जस्। उगिदचामिति नुम्। छन्दसीति। आनन्तर्यादीत्वस्यैव प्रतिषेधः प्राप्नोतीति न तस्यापवादेऽपनीते उत्सर्गो दीर्घः प्राप्नोतीति तस्यापि प्रति

किमेतस्य ज्ञापने प्रयोजनम्। पिबतेर्गुणप्रतिषेधश्चोदितः स न वक्तव्यो भवति॥ यङि च॥ यङ्प्रकरणे हन्तेर्हिंसायामीट्। यङ्प्रकरणे हन्तेर्हिंसायामीङ्वक्तव्यः। जेघ्नीयते। यदीट् अभ्यासरूपं न सिध्यति। एवं तर्हि यङ्प्रकरणे हन्तेर्हिंसायामीक्। एवमप्युपधालोपो न प्राप्नोति। एवं तर्हि यङ्प्रकरणे हन्तेर्हिंसायां घ्नी। नच्छन्दस्य॥ अत्यल्पमिदमुच्यते अपुत्रस्येति। अपुत्रादीनामिति वक्तव्यम्। इहापि यथा स्यात्। जनीयन्तोऽन्वग्रवः। पुत्रीयन्तः सुदानवः। छन्दसि प्रतिषेधे दीर्घत्वस्य प्रतिषेधो वक्तव्यः। संस्वेदयुः मित्रयुः। न वाश्वाघस्याद्वचनमवधारणार्थं नूनं तावद्वक्तव्यम्। किं कारणम्। अश्वाघस्याद्वचनमवधारणार्थं भविष्यति। अश्वाघयोरेव छन्दसि दीर्घो भवति नान्यस्येति॥ शा॥ श्यतेरित्त्वं व्रते नित्यम्। श्यतेरित्त्वं व्रते नित्यमिति वक्तव्यम्। संशितं व्रतम्। न तर्हि वक्तव्यम्।

विधाविधेयः। संस्वेदयुरिति। क्याच्छन्दसीत्युप्रत्ययः। न वेति। अश्वाघयोरनेनेत्वप्रतिषिद्धेऽकृत्सार्वधातुकयोरित्याकारे सिद्धे पुनराद्वचनं नियमार्थमित्यन्येषामाकारो न भवति॥ शाच्छोः॥ श्यतेरित्त्वं व्रत इति विषयो निर्दिश्यते न तूत्तरपदं तेन संशितो ब्राह्मण इत्यत्रापि नित्यमित्त्वं भवति। यद्येवमित्त्वेन व्रतस्याद्योतितत्वात्संशितव्रत इति व्रतशब्दस्य प्रयोगो न प्राप्नोति। नैष दोषः। अन्यत्रापीत्वविधानात्संशितशब्दः सामान्यशब्द इति विशेषप्रतिपादनायाविरुद्धो व्रतशब्दप्रयोगः। व्रते तु नित्यमित्त्वं विधीयते। ॥

मा॰कौ॰ नवक्तव्यमिति। साधारणेनन्यायेनसिद्धत्वादतएवतुल्यधर्मणः शब्दानुपन्यस्यतिं देवत्रानइति। नुदविदोन्द्रेतिनत्वंसंज्ञायांनभव
१३१ ति। देवग्रहणंसंज्ञाविषयोपलक्षणार्थं तेनभवत्रानइत्यादावपिसंज्ञात्वान्नत्वाभावः। यदातुक्रियाशब्दस्त्राणंत्रातइतितदानत्वविकल्पः ७४१
। गलइति। अविविभाषेतिलत्वंप्राण्यङ्गेनित्यंभवतिविषेतुगरइतिलत्वाभावः क्रियाशब्देतूभयंभवतिगरोगलइति। ग्राहइति। विभाषा
ग्रहइति। णप्रत्ययोजलचरेनित्यंभवतिज्योतिषिपचाद्यच्। ग्रहइति। इतियोगइति। लक्षणहेत्वोः क्रियायाइतिशतृशानच्विधिर्हं-
न्तीतिपलायतेवर्षतीतिधावतीत्यादावितिप्रयोगेनभवति। मिथइति। एकस्मिन्विषयेनविकल्प्यन्तेकिंतुविषयभेदेन। एतच्चाकृतिप
क्षेउपपद्यते। नत्रहिसर्वेलक्ष्यमैकविध्यमापाद्यउभयमनुपदिश्यतेततश्चोभयंभवतीत्येतावतैवलक्षणस्य व्यापारः। असकीर्णंतुप्रयोग
वं

नवक्तव्यम्। देवत्रातोगलोग्राहइतियोगेचसद्विधिः। मिथस्तेनविभाष्यन्तेगवाक्षः संशितव्रतः॥ दोदद्घोः॥ अवदत्तं
विदत्तंचप्रदत्तंचादिकर्मणि। सुदत्तमनुदत्तंचनिदत्तमितिचेष्यते॥ किंपुनरयंतकारान्तआहोस्विद्दकारान्तउत
थकारान्तः। अथवाथकारान्तः कश्चात्रविशेषः। तान्तेदोषोदीर्घत्वंस्यात्। यदितान्तः। दत्तीतिदीर्घत्वंप्राप्नोति। दान्ते
दोषोनिष्ठानत्वम्। अथदकारान्तः। रदाभ्यांनिष्ठातोनइतिनत्वंप्राप्नोति। धान्तेदोषोधत्वप्राप्तिः। अथधान्तः। झषस्तथो
र्धोधइतिधत्वंप्राप्नोति। थान्तेऽदोषस्तस्मात्थान्तः। अथथकारान्तोनदोषोभवति॥

वशात् प्रतीयते। गवाक्षइति। वातायनेअवङ् स्फोटायनस्येतिनित्यमवङ् भवतिप्राण्यङ्गेतुगोरक्षिगोक्षीतिभवत्यन्यत्रतुविकल्पेन। ए
तच्चोदाहरणंनतुव्यवस्थितविभाषाणांपरिगणनमन्यासामपिसंभवात्। दोदद्घोः॥ अवदत्तमिति। आदिकर्मग्रहणंप्रदत्तशब्दस्यैवसंभ
वाद्विशेषणमवदत्तादिसिद्ध्यर्थत्वाद्वचनस्यावदत्तादयोपिभवन्तितथाचउपसर्गादित्यस्यावकाशः प्रत्तमवत्तमितिवक्ष्यते। तस्मा
न्निदत्तमितिचेष्यतइतिचशब्देनावदत्तादयोपीष्यन्तइतिसूच्यते॥ किंपुनरिति। यद्यपिदकारः श्रूयतेतथापिसंहितायांतकारादीनाम
येतस्यरूपस्यसंभवात्प्रश्नः। तान्तेदोषइति। यदादइत्येतस्ययस्तकारान्तआदेशस्तत्रदीर्घइतिसूत्रार्थस्तदायंदोषः। यदातुनकारा राम॰
तैदादेशेदीर्घस्तदानदोषः। तस्मात्थान्तइतिसंनिपातपरिभाषाश्रयेतुदान्तधान्तयोर्नदोषः। १३१
॥

अचउ॥ यदीति। दाशब्दाकारस्यदङ्गावेदत्तमितिसंयोगादिश्रूयेत नासौ सूत्रभेद इति दोषायेति शेषः। तदेव सूत्रं लघुक्रियमाणं प्रत्यु
तगुरुणं संपादयति। अथवेति। लघुकरणेपि यदिन्यासान्तरत्वात्स्पष्टएव सूत्रभेद इति मतं तदेवमुत्तरम्। अलोन्त्यस्यह्यवपवादौ आदेः
परस्यानेकाल्शित्सर्वस्येति तयोर्विप्रतिषेधे परं प्रवर्तते। अचइतिवर्तत इति। तेनापूशब्दस्ययोऽचू तस्मात्परस्ययकारस्यहित-
कारआदेशस्तत्रान्त्यंझलांजशोन्त इति जश्त्वं पूर्वस्य झलांजश्झशीति। लवाभ्यामिति। लूञ् कृदोरवित्यप्। अस्यापि भकारादे
तः प्राप्नोति अजूग्रहणानुवृत्तौ त्वपूशब्दस्ययोऽचूतस्मात्परोभकारादौ न कश्चिदस्तीति तत्त्वाभावः। अथवेति। तत्रतकारद्वयात्मकआ

अचउपसर्गात्तः॥ अचउपसर्गात्तत्वेआकारग्रहणं कर्तव्यम्। अलोन्त्यविधयो भवन्ती त्यस्य भविष्यति। नसिध्यति।
किंकारणम्। आदेर्हि परस्य । अत्रहि तस्मादित्युत्तरस्यादेः परस्येति दकारस्य प्राप्नोति। नैषदोषः। अवर्णप्रकरणात्सि
द्धम्। असेति वर्तते। क प्रकृतम्। अस्य च्वाविति। यद्यवर्णग्रहणमनुवर्तते दङ्गावे दोषोभवति। तत्र :। ए
वं तर्हि एवं वक्ष्यामि दोद द्घोरिति। दोर्यआकारस्तस्याद्भवति। ततः अचउपसर्गात्तः। असेत्येवा एवमपि सूत्रभेदः कृतोभवति। नासौ
सूत्रभेदः सूत्रभेदं तमुपाचरन्ति यत्रतदेवान्यत्सूत्रं क्रियते भूयो वा। यदि तदेवोपसंहृत्य क्रियते नासौ सूत्रभेदः। अथवा
द्वितकारकोनिर्देशः क्रियते सोनेकाल्शित्सर्वस्येति सर्वस्य भविष्यति। इहापि तर्हि प्राप्नोति अद्भिरद्भ इति॥ अच इति
वर्तते। तच्चावश्यमजूग्रहणमनुवर्त्यं लवाभ्यामित्येवमर्थम्। अथवाद्वितकारकोनिर्देशः करिष्यते इहार्थौ द्वौ उत्तरा
र्थश्चैकः। घनेरित्वादचस्तः। घनेरित्वादचस्तइत्येतद्भवति विप्रतिषेधेन। घनेरित्वस्यावकाशः। निर्दितं निर्दितवान्। अच
स्त इत्यस्यावकाशः। प्रत्तमवत्तम्।

देशः एषाम्विभक्तिकइहार्थौयस्तु साचूकस्तकारः तस्याचः स्वरितत्वप्रतिज्ञानादुत्तरत्रानुवृत्तिः। लवाभ्यामित्यादौ तु तत्त्वं न भवति पकारलोपादपू
शब्दाभावात्। मचभूतपूर्वगत्याश्रयोन्यायः। अद्भिरित्यादौ सांप्रतिकापूशब्दसंभवे गौणस्याग्रहणादतएव समकक्षत्वाभावात् प्रत्ययपरत्वं यथोः प्रत्यये
संप्रत्यय इति नावतिष्ठते। अद्भिः संस्कृतमितिलिङ्गाद्द्य। नहि प्रत्ययस्यैव ग्रहणेऽद्भिरिति निर्देश उपपत्तिः। घेनेरित्वादित्यादि नि पुरस्तादपवादाइति न्या
यादूह इत्वं दङ्गावस्यैव बाधकं न तत्त्वस्य। तत्रश्चेतत्त्वयोर्दङ्गावापअदयोर्विप्रतिषेधे परं तत्त्वं प्रवर्तते॥

भा॰वै॰ अपो॥ माद्भिरिति। पदन्तो मासिति मासशब्दस्य मासादेशस्य छन्दस्येव विधानान्मासश्छन्दसीति छन्दोग्रहणं न कर्तव्यं न क्रियमाणं भाषाया ७४१
१३२ मपि क्वचित्पदादयः प्रयुज्यन्त इति ज्ञापनायेत्याहुः॥ आपू॥ ईत्वमपेरिति। इहाज्ग्रहणमनुवर्तते तेनाज्रूपो विशेष्यमाणोऽजन्तस्य ज्ञा
पेरीत्वविधीयमानमलोऽन्त्यस्येत्यन्त्यस्य प्राप्नोतीति भावः। लोपोऽन्त्यस्येति। नुपिनाज्विशेष्यते यथा पृथिव्यामेवं चैकप्रस्यानो
विशेषणविशेष्यभावो भवति तत्रानन्त्यस्याचः सावकाशमीत्वं पूर्वविप्रतिषेधेन णिलोपो बाधते। इतरस्त्वगृहीताभिप्राय आह। अ
नवकाश इति। ईत्वमेव त्वनवकाशत्वाद्बाधकं प्राप्नोति। एवमपीति। नन्वसुपरत्वादीत्वं तस्य स्थानिवद्भावाण्णिलोपो-

इहोभयं प्राप्नोति। नीतम्। वीतम्। अचलदित्येतद्भवति विप्रतिषेधेन॥ अपो भि॥ अपो भि मासश्छन्दसि। अपो भीत्यत्र मा
सश्छन्दस्युपसंख्यानं कर्तव्यम्। माद्भिरिष्टा इन्द्रो वृत्रहा। अत्यल्पमिदमुच्यते। स्ववसस्तवसोमासउषसश्च तइष्यते।
स्ववद्भिः स्ततवद्भिः समुषद्भिरजायथाः। माद्भिरिष्टा इन्द्रो वृत्रहा॥ सनि मी॥ इत्त्वं सनि राधो हिंसायाम्। इत्त्वं सनि राधो हिं
सायामिति वक्तव्यम्। प्रतिरित्सति। हिंसायामिति किमर्थम्। आरित्सति। आपू॥ आपू॥ ज्ञपेरीत्वमनन्त्यस्य। ज्ञपेरीत्वमनन्त्य
स्येति वक्तव्यम्। ज्ञीप्सति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। लोपोऽन्त्यस्य बाधको भविष्यति। अनवकाशा विधयो बाधका
भवन्ति। सावकाशश्च णिलोपः। कोऽवकाशः। कारणा हारणा। एवमपीत्वमन्त्यस्य लोपस्य बाधकं स्यात्। अनवकाशा हि
विधयो बाधका भवन्ति। ईत्वमपि सावकाशम्। कोऽवकाशः। अनन्त्यः। कथं पुनः सत्यन्त्येऽनन्त्यस्येत्वं स्यात्। भवेद्योऽचा-
ङ्गं विशेषयेत्तस्यानन्त्यस्य न स्यात्। वयं तु खल्वङ्गेनाचं विशेषयिष्यामः। अङ्गस्याचो यत्र तत्रस्थस्येति। एवमप्युभयोः
सावकाशयोः परत्वादीत्वं प्राप्नोति। तस्मादनन्त्यस्येति वक्तव्यम्॥ अत्र लोपो॥ अभ्यासस्यानचि। अभ्यासस्येति यदु
च्यते तदनचि द्रष्टव्यम्। पतापतः। चराचरः। चलाचलः। वदावदः॥

भविष्यतीति ईत्ववचनं त्वनन्त्यस्य श्रवणार्थं स्यात्। नैतदस्ति। सकृद्गतौ विप्रतिषेधे यद्बाधितमिति लोपप्रसङ्गात्॥ अत्र लोपो॥ चराचर इति।
चरिचलिपतिवदीनामच्याक्चाभ्यासस्येति द्विर्वचनमागागमश्चेति हलादिशेषोऽत्र न भवति। नन्वागागमविधानसामर्थ्याद्धलादिःशेषो न रामः
भविष्यति। न हि हलादिशेषे आगमं देशस्य वा विशेषोऽस्तीत्यादेश एव अकारो विधेयः स्यात्। नैतदस्ति। सत्यपि हलादिःशेषे विग्रहीतश्रव १३२
णार्थमागविधानं स्यादित्यनचीत्युच्यते॥

हलादिः शेषः॥ हलामादिरिति। विग्रहद्वयदर्शनं विस्पष्टप्रतिपत्त्यर्थम्॥ अजादिष्विति। अजादिष्वभ्यासेषु हलन्तरापेक्षयादित्वे हल आश्रीयमाणे शेषः प्राप्नोति। आनक्षेति। अशूव्याप्तौ संघाते चेत्यस्माल्लिटि अत्र ककारस्य शेषः प्राप्नोति। कर्मधारये त्वभ्यासापेक्षमादित्वं हलो विज्ञायत इति शेषो न भवति। आदिशेषनिमित्तत्वादिति। शेषशब्दोऽन्यनिवृत्तियुक्तमवस्थानमाहेति यत्रैवाभ्यासे पपाचेत्यादावादेर्हलोऽवस्थानं तत्रैवान्यस्य निवृत्तिः स्यान्नान्यत्र। अवस्थानं हि शब्दार्थत्वात्प्रधानम्। न च प्रधानाभावे आनुषङ्गिककार्यप्रवृत्तिरेनस्त्वन्त्रापि ककारषकारयोस्स्यामवस्थायां निवृत्त्यप्रसङ्गः। षष्ठीसमासेऽप्याटतुः आटुरित्यत्र टकारस्यादित्वाद्विशेषप्रसङ्गस्तच्चागुक्त एव। तत्र यथाकृतिपक्ष आश्रीयते तेन-

हलादिः॥ किमयं षष्ठीसमासः। हलामादिर्हलादिः हलादिः शिष्यत इति। आहोस्वित्कर्मधारयः हल् चासावादिर्हलादिः हलादिः शिष्यत इति। कश्चात्र विशेषः। हलादिशेषे षष्ठीसमास इति चेदजादिषु शेषप्रसङ्गः। हलादिशेषे षष्ठीसमास इति चेदजादिषु शेषः प्राप्नोति। आनक्ष आनक्षतुः आनक्षुः। अस्तु तर्हि कर्मधारयः। कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे लोपवचनम्। कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे आद्यस्य हलोऽभावे लोपो वक्तव्यः। आटतुः आटुः। तस्मादनादिलोपः। तस्मादनादिर्हल् लुप्यत इति वक्तव्यम्। उक्तं वा। किमुक्तम्। प्रतिविधास्यते हलादिशेष इति। अयमिदानीं स प्रतिविधानकालः। इदं प्रतिविधीयते। इदं प्रकृतम्। अत्र लोपोऽभ्यासस्येति। ततो वक्ष्यामि। ह्रस्वः। ह्रस्वो भवत्यादेशः। अभ्यासस्य लोप इत्यनुवर्तते। तत्र ह्रस्वभाविनां ह्रस्वः। लोपभाविनां लोपो भविष्यति। ततो हलादिः शेषश्चेति॥

दाभ्यासाकृतौ वर्तमानो हलादिः सर्वस्यामभ्यासव्यक्तावनादेर्निवृत्तिं करोतीति दोषाभावो व्यक्तिपक्षे तु यस्यामेवाभ्यासव्यक्तौ हल आदेरवस्थानं तत्रैवानादेर्निवृत्तिर्नान्यत्रेति दोषप्रसङ्गः। ह्रस्वभाविनामिति। ह्रस्वश्रुत्या च परिभाषोपस्थानादजन्तस्याभ्यासस्य ह्रस्वो विधीयमानोऽलोऽन्त्यस्येति वचनादिच एव दीर्घस्य ह्रस्वस्य च लोपबाधनार्थं विज्ञायत इति। हल्विषय एवादिशेषनिरपेक्षो लोपोऽवतिष्ठते। ततश्चादेरपि हलो लोपे प्राप्ते तद्बाधनार्थं हलादिः शेष इति सूत्रम्। एतदेव ज्ञापकं लोपविधावलोऽन्त्यपरिभाषा नोपतिष्ठत इत्यानक्षेत्यादावनन्त्यस्यापि हलो लोपो भवतीति न कश्चिद्दोषः॥

॥

भा॰कै॰ अहल् चेति। अविद्यमानहल्कोऽभ्यासो भवतीत्यर्थः॥ शर्पूर्वाः॥ उचिच्छिषतीति। उच्छी विवासे। छे चेत्यन्तरङ्गत्वात्तुकः सन्इट्पूर्वत्रासिद्धमिति चु ७ ५१
१३३ त्वस्यासिद्धत्वात्तन्नि शब्दो द्विरुच्यते नकारस्य शेषे प्राप्ते त्व शेषार्थं वार्तिकम्। ननु च पूर्वत्रासिद्धीयमद्विर्वचन इति श्चुत्वे कृते च्छिशब्दस्य द्विर्व
चने चकारशेषे शीवत्संसिध्यति। न चेदमस्ति निमित्ताभावे नैमित्तिकस्याप्यभाव इति येन चुत्वं निवर्तेत। एवं तर्हि पूर्वत्रासिद्धीयमद्विर्वचन इत्ये
तदनित्यमुभौ साभ्यासस्येति वचनात्। अन्यथा कृतणत्वस्य द्विर्वचने प्राणिणदित्यादि सिध्यतीति किं सूत्रेण। तथा चौजढदित्यसिद्धत्वेऽस्योदा-
हरणं प्रदर्शयिष्यते। इतरो व्यवस्थितस्य समुदायस्य प्रविभज्यान्वाख्यानेऽन्तरङ्गत्वं तु कोनपेक्ष्याकृतमेव तु कि द्विर्वचनं मत्वाह। चर्त्वे कृते

अथ वैवं वक्ष्यामि ह्रस्वोऽहल्। ह्रस्वो भवत्यभ्यासस्येति। ततोऽहल् च भवत्यभ्यासः। तत आदिःशेषः। आदिःशेषश्च भवत्यभ्यासस्येति। अथवा योगविभागः करिष्यते। ह्रस्वादेशो भवत्यभ्यासस्य। ततः हल्। हल् च लुप्यतेऽभ्यासस्य। तत आदिःशेषः। आदिःशेषश्च भवत्यभ्यासस्य॥ शर्पूः॥ शर्पूर्वे शेषे खर्पूर्वग्रहणम्। शर्पूर्वे शेषे खर्पूर्वग्रहणं कर्तव्यम्। खर्पूर्वाः खयः शिष्यन्ते। खरो लुप्यन्त इति वक्तव्यम्। किं प्रयोजनम्। उचिच्छिषति। तुकः श्रवणं मा भूदिति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। चर्त्वे कृते तुग्न भविष्यति। असिद्धं चर्त्वं तस्यासिद्धत्वात्तुक् प्राप्नोति। सिद्धकाण्डे पठितमभ्यासजश्त्वचर्त्वमेत्त्वतुकोरिति। एवमप्यन्तरङ्गत्वात्प्राप्नोति तस्मात्खर्पूर्वग्रहणं कर्तव्यम्। न कर्तव्यम्। एत्त्वतुग्ग्रहणं न करिष्यते। अभ्यासजश्त्वचर्त्वं सिद्धमित्येव। आदिःशेषप्रसङ्गस्तु। आदिःशेषस्तु प्राप्नोति। तिष्ठासति। ननु चानादिःशेष आदिःशेषं बाधिष्यते। कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात्। असति खल्वपि संभवे बाधनं भवतीति। अस्ति च संभवो यदुभयं स्यादिति। यद्यादिःशेषोऽपि भवति शर्पूर्ववचनमिदानीं किमर्थं स्यात्। शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपप्रतिषेधार्थम्। शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपो मा भूदिति।

इति। अभ्यासे चर्चेति चर्त्वे छस्य कृते तुगभावाद्रूपं सिध्यति। असिद्धमिति। तुकि कर्तव्ये। एवमप्यन्तरङ्गत्वादिति। शब्दनित्यत्वेऽप्युपाया एमः
नामवश्याश्रयणीयोऽन्तरङ्गबहिरङ्गभावः एत्त्वतुग्ग्रहणमिति। तदकरणे हलादिःशेषेऽपि कर्तव्ये चुत्वलक्षणस्य चर्त्वस्यासिद्धत्वा १३३
भावात्तकारस्य चकारे कृते हलादिःशेषेण निवर्तिते छकाररूपं सिध्यति॥ आदिःशेषप्रसङ्गस्त्विति। विषयभेदाद्विरोधाभावाच्च बाध्यबाधकभावा
योगः। शर्पूर्ववचनमिति। अपवादाः वाक्यार्थद्वयं साधयन्त्यपवादं च विदधत्युत्सर्गं च निवर्तयन्ति। तत्रोत्सर्गाभ्युपगमे एकार्थवत्त्वाद्द्विती-
यार्थस्य त्यागादानर्थक्यप्रसङ्ग एवेत्यर्थः। हलादिःशेष इत्यनेन खयां निवृत्तौ प्राप्तायामवस्थानविधानादानर्थक्यं नास्ति। ॥

व्यपकर्षविज्ञानादिति। व्यपकर्षेणोत्सर्गस्य निवर्तनं तस्य विज्ञानं तस्मादपवादविधानादित्यर्थः। एकाभ्यासविषयत्वादविरोधेऽप्युत्सर्गापवादभावः॥ दाधर्ति॥ श्लाविति। बहुलं छन्दसीति शपः श्लुः। तूतुजानवदिति। तुजादीनां दीर्घोऽभ्यासस्येति दीर्घत्वमित्यर्थः। पर्णंसुषिवदिति। य

व्यपकर्षविज्ञानात्सिद्धम्। व्यपकर्षविज्ञानात्सिद्धमेतत्। किमिदं व्यपकर्षविज्ञानादिति। अपवादविज्ञानात्। अपवादत्वान्नादिशेष आदिशेषं बाधिष्यते। ननु चोक्तं कथमन्यस्योच्यमानमन्यस्य बाधकं स्यादिति। इदं तावदयं प्रष्टव्यः। यदि तत्रोच्येत किमिह स्यात्। हलादिशेषः। हलादिशेषश्चेन्नाप्नोतीह हलादिशेष इदमुच्यते तद्बाधकं भविष्यति। यदप्युच्यते असति खल्वपि संभवे बाधनं भवति। अस्ति च संभवो यदुभयं स्यादिति। सत्यपि संभवे बाधनं भवति। तद्यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं बाधकं भवति। एवमिहापि सत्यपि संभ- भ्या
वेऽनादिशेष आदिशेषं बाधिष्यते॥ दाधर्ति॥ दाधर्तीति किं निपात्यते। धारयतेः श्लौ अभ्यासस्य दीर्घत्वं णिलुक् च। अनिपात्यम्। तूतुजानवदभ्यासदीर्घत्वं पर्णंसुषिवत् णिलुक् च भविष्यति। धृङो वा श्लौ अभ्यासस्य दीर्घत्वं परस्मैपदं च। अनिपात्यम्। तूतुजानवदभ्यासदीर्घत्वं युध्यतिवत्परस्मैपदं भविष्यति। दर्धर्तीति किं निपात्यते। धारयतेः श्लौ अभ्यासस्य रुक् णिलुक् च। अनिपात्यम्। देवा अदुह्रवत् रुग्भविष्यति पर्णंसुषिवत् णिलुक् च भविष्यति। धृङो वा अभ्यासस्य च रुक् परस्मैपदं च। अनिपात्यम्। देवा अदुह्रवद्रुट् युध्यतिवत्परस्मैपदं च भविष्यति। दर्धर्षीति किं निपात्यते। धारयतेः श्लौ अभ्यासस्य रुक् णिलुक् च। अनिपात्यम्। देवा अदुह्रवद्रुट् पर्णंसुषिवत् णिलुक् च भविष्यति। धृङो वा अभ्यासस्य रुक् परस्मैपदं च। अनिपात्यम्। देवा अदुह्रवद्रुट् युध्यतिवत्परस्मैपदं भविष्यति। बोभूत्विति किं निपात्यते। भवतेर्यङ्लुगन्तस्यागुणत्वं निपात्यते। नैतदस्ति प्रयोजनम्। सिद्धमत्रागुणत्वं भूसुवोस्तिङीति।

या पर्णानि शोषयन्ति पर्णंसुषो वाता इत्यादौ क्विपि बहुलमन्यत्रापि संज्ञाछन्दसोरिति णिलुक् भवत्येवं दाधर्तीत्यादौ भविष्यतीत्यर्थः। धृङ इति। धृङ् अवस्थान इत्यस्य श्लौ प्राप्ते व्यत्ययेन शप्। युध्यतिवदिति। व्यत्ययो बहुलमित्यनेनेत्यर्थः। रुडिति। शीङो रुट्। बहुलं छन्दसीत्यनेन। ॥

 बोभवीमीति। लिङर्थे लेट् लेटोडाटावित्यट्। सिद्धमत्रेति। प्रत्ययलक्षणेनयङ्प्यनुदात्तङित इति ङित्त्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तं 
तथापि लोपे लुक्यतइत्यादौ यङन्तादात्मनेपदं तत्प्रत्ययस्य ङित्वात्प्रत्ययलक्षणं भवत्येव। एतन्नियमार्थमिति। एवं चादादिषु चर्करीतं पर
स्मैपदमिति लिङ्गसिद्धानुवादः परस्मैपदग्रहणं कर्तर्येव चेदमात्मनेपदं नियम्यत इति भावकर्मणोर्यङ्लुगन्तादात्मनेपदं भवत्येव॥ सु
ति॥ किमर्थमिति। स्वपिरेव सौत्रत्वान्निर्देशस्य दीर्घकत्वान्निर्दिष्ट इति पूर्वः पक्षः। तत्र चलिटि किति वचिस्वपीति संप्रसारणविधानात्तत्र
संप्रसारणस्य द्विर्वचने सत्यभ्यासस्य संप्रसारणं श्रूयते अकिति लिट्यभ्यासस्येति संप्रसारणं सनो रुदविदेति कित्वविधानाद्ध चिस्वपीति

एवं तर्हि नियमार्थं भविष्यति। अत्रैव यङ्लुगन्तस्य गुणो न भवति। क्व मा भूत्। बोभवतीति। तेति क्नोः इति किं निपात्यते। तिजे
र्यङ्लुगन्तस्यात्मनेपदं निपात्यते। नैतदस्ति प्रयोजनम्। सिद्धमत्रात्मनेपदमनुदात्तङित आत्मनेपदमिति। नियमार्थं भवि
ष्यति। अत्रैव यङ्लुगन्तस्यात्मनेपदं भवति। नान्यत्रेति। क्व मा भूत्। बेभिदीति चेच्छिदीति॥ स्वपिस्यमिव्येञां यङि॥ संप्रसारणम्॥ कि
मर्थं स्वपेरभ्यासस्य संप्रसारणमुच्यते। यदा सर्वेषामभ्यासस्यानेषु स्वपेः संप्रसारणमुक्तम्। स्वापिग्रहणं व्यपेतार्थम्। स्वा
पिग्रहणं क्रियते व्यपेतार्थम्। व्यपेतार्थोयमारम्भः। सुष्वापयिषतीति। अस्ति प्रयोजनमेतत्। किं तर्हीति। तत्र कदन्ते ऽतिप्रसङ्गः। तत्र कदन्ते अ
तिप्रसङ्गो भवति। इहापि प्राप्नोति स्वापकमिच्छति स्वापकीयति। स्वापकीयतेः सन्। सिस्वापकीयिषतीति। सिद्धं तु णिग्रहणात्। सिद्ध
मेतत्। कथम्। णिग्रहणं कर्तव्यम्। न कर्तव्यम्। निर्देशादेव हि व्यक्तं ण्यन्तस्य ग्रहणमिति। नात्र निर्देशः प्रमाणं शक्यं क
र्तुम्। यथा हि निर्देशस्तथेहापि प्रसज्येत। स्वापं करोति स्वापयति। स्वापयतेः सन्। सिष्वापयिषतीति। तस्माण्णिग्रहणं
कर्तव्यम्।

संप्रसारणं स्वपिस्यमिव्येञां यङीति यङि चङि स्वापेश्चङीति। व्यपेतार्थमिति। स्वपेः सनादिषु परतो विहितं संप्रसारणं णिचा व्यवधानेन प्राप्नो
तीति स्वापेर्ण्यन्तस्याभ्यासस्य संप्रसारणं विधीयते। सुष्वापयिषतीति। स्वापयितुमिच्छतीति सन्। इट् गुणायादेशाः। रोन्तस्य स्थानिवत्वा
त्स्वापे द्विर्वचनमभ्यासस्य संप्रसारणं स्तौतिण्योरिति षत्वम्। इतरस्तु ण्यन्तस्य ग्रहणमबुध्वा येन केनचित्प्रत्ययेन व्यवहितस्य स्वपेरभ्यासस्य सं 
प्रसारणमनेनोक्तमिति मत्वाह। अस्ति प्रयोजनमिति। स्वपितीति स्वापकस्तमिच्छतीति क्यच्। निर्देशादेवेति। ण्यन्त एव स्वपिः सूत्रे निर्दि- 
ष्ट इत्यर्थः। स्वापं करोतीति। स्वपेर्घञन्तात्तत्करोतीति णिच्। तस्माण्णिग्रहणमिति। स्वपेर्णौ रिति वक्तव्यम्। तेन स्वपेर्यो णिर्विधीयते तदन्तस्य ग्र
हणं तु घञन्तात्तस्य ग्रहणाभावः॥ ॥

निजाम्॥ त्रिग्रहणमिति। इत्करणपरिच्छिन्नास्त्रय एव निजादय इत्यर्थः। एकारे विधातव्ये गुणग्रहणमिकः परिभाषोपस्थानार्थं तेन ह
लादिशेषे कृते गुणो भवत्यन्यथा तदपवादो हलः स्थाने एकारः स्यात्। अथाभ्यासविकारेऽपवादा नोत्सर्गान्बाधन्त इत्याश्रीयते त
दाविसप्रष्टार्थं गुणग्रहणम्॥ अर्त्तिं॥ अर्त्तिग्रहणमिति। ऋसृगताविति जुहोत्यादौ पठ्यते गा स्तुतौ च छन्दसीति छन्दोग्रहणं पूर्वेषाम

निजां त्रयाणां गुणः श्लौ॥ त्रिग्रहणानर्थक्यं गणान्तत्वात्। त्रिग्रहणमनर्थकम्। किं कारणम्। गणान्तत्वात्। त्रय ए
व निजादयः। उत्तरार्थं तु। उत्तरार्थं तर्हि त्रिग्रहणं कर्तव्यम्। भञ्जामित्त्रयाणां यथा स्यात्। इह मा भूत् जहाति॥ अर्त्तिपि
पर्त्त्योश्च॥ अर्त्तिग्रहणं किमर्थम्। न बहुलं छन्दसीत्येव सिद्धम्। न ह्यन्तरेण छन्दो र्त्तेः श्लुर्लभ्यः। एवं तर्हि सिद्धे सति यद
र्त्तिग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामर्त्तेः श्लुर्भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। इयर्तीत्येतत् सिद्धं भवति
॥ गुणो यङ्लुकोः॥ रोचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वम्। ऐचोर्यङि दीर्घत्वं प्राप्नोति। डोढौकयतेतौत्रौकयत इति। न
नु च ह्रस्वत्वे कृते गुणो भविष्यति। दीर्घत्वं न भविष्यति। न सिद्ध्यति। किं कारणम्। ह्रस्वाद्धि परं दीर्घत्वम्। ह्रस्वत्वं क्रियतां दी
र्घत्वमिति। परत्वाद्दीर्घत्वेन भवितव्यम्। न वाभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात्। न वा एष दोषः। किं कारण
म्। अभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात्। अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इत्येषा परिभाषा क
र्तव्या। कान्येतस्याः परिभाषायाः प्रयोजनानि। प्रयोजनं सन्वद्भावस्य दीर्घत्वम्। अचीकरत् अजीहरत्। सन्वद्भा
वमपवादत्वाद्दीर्घत्वं न बाधते। मान्प्रभृतीनामित्वस्य मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्वं न बाधते। गणोरीत्वं हला
दिशेषस्य। गणोरीत्वमपवादत्वाद्धलादिशेषं न बाधते।

पिप्रभृतीनां शेष इति छान्दस एवार्तेः श्लुविषयः इयर्तीति। तिपृ प्रापूपाप: श्लुः द्विर्वचनमुरदित्यत्वमित्वमभ्यासस्यासवर्णे इति इयङ्। गु
णर परत्वे॥ गुणो॥ रोचोरिति। ह्रस्वस्यावकाशः यया वित्यादौ दीर्घोऽकित इत्यस्यावकाशः इतेऽकृते वा ह्रस्वत्वे पापच्यत इति। डोढौकयत इ-
त्यादौ तु परत्वादौकारस्य दीर्घ ओकार एव प्राप्नोति। ऐकारस्योदाहरणं पेपेण्यत इति। ह्रस्वत्वे कृत इति। वक्ष्यमाणोऽभिप्रायः। गुणाच्च-
दीर्घस्यापवाद इति दीर्घाभावः। ॥

भा॰ कै॰ इदमयुक्तमिति। परत्वाद्दीर्घप्रसङ्ग इत्युक्तोत्सर्गापवादयोर्बाध्यबाधकत्वाभावः प्रतिपाद्यत इत्ययुक्तं प्रयोजनमपि किंचिन्न वचनानुरू
२३५ पमिति पौर्वापर्यविरोधादयुक्तम्। न च सन्वद्भावमिति। सन्वद्भावस्यावकाशोऽचिक्षणदिति। दीर्घस्यावकाशोऽदीदपदिति। इहोभयं
प्राप्नोति। अचीकरदिति तत्र परत्वाद्दीर्घः प्राप्नोति। न खल्वपीति। सन्प्रत्ययेऽभ्यासदीर्घत्वं च संनियोगेन विधीयत इत्यन्तरङ्गं दीर्घत्वम्।
इत्वं तु बहिरङ्गं सनि परतोऽङ्गाधिकारेऽभ्यासस्याकारान्तस्य विधानात्। न खल्वपीति। आदेःशेषो विधीयतेऽन्यस्य त्वीत्वमिति नास्त्यु
त्सर्गापवादभावो हलादिशेषे अभ्यासस्येत्यवयवषष्ठी। ई च गण इत्यत्राभ्यासस्येति स्थानषष्ठीति भिन्नविषयावीत्वहलादिशेषावत

इदमयुक्तं वर्तते। किमत्रायुक्तम्। ऐचोर्यङि दीर्घत्वप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वमित्युक्तं तत्र उच्यते न वाभ्यासविकारे
ष्वपवादस्योत्सर्गाबाधकत्वादिति। तस्याश्च परिभाषायाः प्रयोजनानि नामोच्यन्ते। प्रयोजनं सन्वद्भावस्य दीर्घत्वं मान्म
भृतीनामित्वस्य गणेरीत्वं हलादिशेषस्येति। न च सन्वद्भावमपवादत्वाद्दीर्घत्वं बाधते किं तर्हि परत्वात्। न खल्वपि मा
न्प्रभृतीनां दीर्घत्वमपवादत्वादित्वं बाधते किं तर्ह्यन्तरङ्गत्वात्। न खल्वपि गणेरीत्वमपवादत्वाद्धलादिशेषं बाधते। किं त
र्ह्यनवकाशत्वात्। एवं तर्हीयं परिभाषा कर्तव्या अभ्यासविकारेषु बाधका न बाधन्त इति। सा तर्ह्येषा परिभाषा कर्तव्या।
न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति। भवत्येषा परिभाषेति। यदयमकित इति प्रतिषेधं शास्ति॥ दीर्घो॥ अकित इति किम
र्थम्। यंयम्यते रंरम्यते। अकित इति शक्यमकर्तुम्। कस्मान्न भवति यंयम्यते रंरम्यत इति। नुकि कृतेऽनजन्तत्वात्।
अत उत्तरं पठति। अकिद्वचनमन्यत्र किदन्तस्यालोऽन्त्यनिवृत्त्यर्थम्। अकिद्वचनं क्रियते ज्ञापकार्थम्। किं ज्ञाप्यम्। एतज्ज्ञा
ज्ञापयत्याचार्योऽन्यत्र किदन्तस्याभ्यासस्यालोन्त्यविधिर्न भवतीति। किमेतस्य ज्ञापने प्रयोजनम्। प्रयोजनं ह्रस्वत्वालोपत्वगुणेषु।

वकाशत्वात्तु बाधकमीत्वं हलादिशेषस्य निरवकाशा हि विधयः सावकाशान्विधीन्बाधन्त इति न्यायाद्यदा तु येन नाप्राप्त इति न्यायः तदास्त्ये
वोत्सर्गापवादभावः। अभ्यासविकारेषु बाधका इति। बाधकत्वमनपेक्षितनिमित्तविशेषमाश्रयणीयमित्यर्थः। यदयमिति। यथा चाकित इ
ति ज्ञापकं तथोत्तरत्र वक्ष्यते। दीर्घो॥ नुकि कृत इति। दीर्घश्रुत्याच्परिभाषोपस्थानादचाभ्यासस्य विशेषणादजन्तस्याभ्यासस्य दीर्घो विधीय एमः
ते। स चालोऽन्त्यस्येति वचनादन्त्यस्याचो भवति। अकिद्वचनमिति। यद्यचाभ्यासो विशेष्यते। अकित इति प्रतिषेधोऽनर्थकः स्यात्तस्मादभ्या २३५
सेनाज्विशेष्यते ततोऽभ्यासस्येति विशेषणषष्ठीत्यलोऽन्त्यस्येति नोपतिष्ठत इत्येतज्ज्ञाप्यत इत्यर्थः।

अवचच्छतुरिति। छेदने आत्वं लिटि छाशब्दस्य द्विर्वचनमन्तरङ्गत्वात्तुकि कृतेऽनन्त्यस्याप्यचो ह्रस्वत्वम्। चच्छदतुरिति। उच्छृदिर् दी
प्तिदेवनयोः। छृदो द्विर्वचनं छे चेति तुकि कृते उरदित्यत्वमभ्यासे न ऋवर्णस्य विशेषणात्। चिच्छादयिषतीति। छद संवरणे। परत्वादेते वि
धय इति। न ह्येतेषूदाहरणेषु तुगन्तरङ्गः। प्रत्ययविशेषनिमित्तत्वादभ्यासस्याभ्यासाश्रयत्वात्तु कह्रस्वादीनाम्। तदन्ताग्रहणादिति। ज्ञा
पकमन्तरेणापि विशेषणविशेष्यभावे कामचारात्कृतेऽपि तुक्येते विधयः सिध्यन्ति। एवं च कृत्वेति। ततश्चाकित इति वचनं दीर्घनिषेधाय

ह्रस्वत्वम्। अवचच्छतुः अवचच्छुः। अतं चच्छदतुः चच्छदुः। इत्वं चिच्छादयिषति चिच्छर्दयिषति। गुणः चे
च्छिद्यते चोच्छुप्यते। तुकि कृते अनन्त्यत्वादेते विधयो न प्राप्नुवन्ति। विप्रतिषेधात्सिद्धम्। नैतानि सन्ति प्रयोजना
नि। विप्रतिषेधेनाप्येतानि सिद्धानि तुक् क्रियतामेते विधय इति। किमत्र कर्तव्यम्। परत्वादेते विधय इति। तदन्ता
ग्रहणाद्वा। अथवा नैवं विज्ञायते अभ्यासस्याजन्तस्य ऋकारान्तस्याकारान्तस्येगन्तस्येति। कथं तर्हि अभ्यासे योऽच् अभ्यासे य
ऋकारः अभ्यासे योऽकारः अभ्यासे य इगिति। एवं च कृत्वा दीर्घत्वं प्राप्नोति॥ एवं तर्हीदमिह व्यपदेश्यं सद् आचा
र्यो न व्यपदिशति। किम्। अपवादो नुक् दीर्घत्वस्येति। एवं तर्हि सिद्धे सति यदकित इति प्रतिषेधं शास्ति तज्ज्ञापय
त्याचार्यो भवत्येषा परिभाषाऽभ्यासविकारेषु बाधका न बाधन्त इति। किमेतस्य ज्ञापने प्रयोजनम्। ऐचोर्यङि दी
र्घप्रसङ्गः ह्रस्वाद्धि परं दीर्घत्वमित्युक्तं स न दोषो भवति। नुग्॥ नुकि यंयम्यते रंरम्यत इति रूपासिद्धिः। नुकि सति यं
यम्यते रंरम्यत इति रूपं न सिद्ध्यति। अनुस्वारागमवचनात्सिद्धम्। अनुस्वारागमो वक्तव्यः। एवमपीदमेव रू
पं स्याद्ययम्यते इदं न स्यात् यंयम्यते। पदान्तवच्चेति वक्तव्यम्। वा पदान्तस्येति॥ रीग्॥ ऋदुपधस्य च॥ रीगृत्वतः सं
योगार्थम्। रीगृत्वत इति वक्तव्यम्। किं प्रयोजनम्। संयोगार्थम्। संयोगान्ताः प्रयोजयन्ति। वरीवृश्च्यते परीपृच्छ्यते बरीभ्रज्ज्यते॥

न तु ज्ञापकार्थः। अपवादो नुगिति। नाप्राप्ते दीर्घे नुक आरम्भात्। एवं तर्हीति। ओहाक् त्यागे इत्यस्य तु निषेधाद्या अकित इति न भवति। धातु
ली यकि द्वित्वेऽभ्यासः। ककारो हिह्स्वत्रीहिकालयोरित्यत्र हाङ्‌हाकोः सामान्यग्रहणार्थः॥ नुग्॥ न परकरणं भूतपूर्वस्यापि दीर्घस्य नि-
वृत्त्यर्थं तेन बाभाम्यत इति नुक् न भवति। नुकि यंयम्यत इति। अङ्गत्वात् परत्वादनुस्वारो न प्राप्नोति। एवमपीति। नित्यं परसवर्णः प्राप्नोति विक
ल्पेन चेष्यते। पदान्तवच्चेति। तेन वा पदान्तस्येति परसवर्णविकल्पः।

रुग्निकौ॥ मर्मृज्यत इति। रुग्निकौ च लुकीति रुग्विधीयमानो न प्राप्नोतीति वचनम्॥ ऋतश्च॥ अङ्गविशेषणमिति। यद्यप्यभ्यासविशेषणीभूत- 
पूर्वदीर्घनिवृत्त्यर्थं तपरकरणं तथापि मुख्यकल्पनासंभवे गौणीकल्पना किमित्याश्रीयत इति मत्वा भाष्यकारेणाङ्गविशेषणम् तद् इत्याश्रि-
तम्। पचतीति। लटउपलक्षणं तेन लटि चाकर्तीत्यादिरूपाणि किरतिं यो नयेदित्यर्थः। प्राप्तिज्ञमिति। तपरकरणादङ्गविशेषणम् तद् इति
तेन रुगादीनां विषयविभागेन प्राप्तिस्तां जानातीत्यर्थः। प्रारब्ध इति। संग्रहणं संग्रहः साधुशब्दराशिः स तेन प्रारब्ध इति योग्यतातिशयो

रुग्रि॥ मर्मृज्यते मर्मृज्यमानास इति चोपसंख्यानं कर्तव्यम्। मर्मृज्यते मर्मृज्यमानासः॥ ऋतश्च॥ किमिदमृकारग्रहणमङ्ग-
विशेषणमृकारान्तस्याङ्गस्येति। आहोस्विदभ्यासविशेषणमृकारान्तस्याभ्यासस्येति। अङ्गविशेषणमित्याह। कथं ज्ञा-
यते। यदयं तपरकरणं करोति। कथं कृत्वा ज्ञापकम्। न हि कश्चिदभ्यासे दीर्घोऽस्ति यदर्थं तपरकरणं क्रियते। अथाङ्गवि-
शेषणे ऋकारग्रहणे सति तपरकरणे किं प्रयोजनम्। इह माभूत् चाकर्ति चाकीर्तः चाकिरति। किरतिं चर्करीतान्तं पचती-
त्यत्र यो नयेत्। प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः॥ सन्वत्॥ इह कस्मान्न भवति। अजजागरत्। लघुनि चङ्परे इत्यु-
च्यते व्यवहितं चात्र लघु चङ्परम्। इहापि तर्हि न प्राप्नोति। अचीकरत् अजीहरत्। वचनाद्भविष्यति। इहापि वचनात्प्राप्नोति
। अजजागरत्। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्। केन च नाव्यवधानम्। वर्णेनैकेन। एतेन पुनः संघातेन व्य-
वधानं भवति न भवति च। एवमप्यचिक्षणद् अत्र न प्राप्नोति। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानामि-
त्वमिति। यदयमत्स्मृदृत्वरप्रथम्रदस्तृस्पशामिति त्वबाधनार्थं मत्वं शास्ति। सन्वद्भावदीर्घत्वे रोर्णौच्युपसंख्यानम्। सन्वद्भा-
वदीर्घत्वे रोर्णौच्युपसंख्यानं कर्तव्यम्। वादितवन्तं प्रयोजितवान्। अवीवदद्वीणां परिवादकेन। किं पुनः कारणं न सिध्य-
ति। णिचाव्यवहितत्वात्।

द्भावेन न स्पृश्यते। सन्वत्। चङ्पर इति बहुव्रीहिणान्यपदार्थो णिराश्रीयते तेनाचकमनेति केवले चङि सन्वद्भावो न भवति। न हि णिङ्व्यतिरे-
केणान्यश्चङ्परः संभवति तेन चङ्परे णौ यल्लघु तस्मिन्परतोऽभ्यासस्य सन्वत्कार्यं भवति। इह कस्मादिति। न कश्चिदभ्यासो लघोरनन्तरः संभ- 
वतीति सप्तमी विज्ञानादत्रापि प्रसङ्ग इति भावः। इतरः परसप्तम्याश्रयेयेन नाव्यवधानमित्याश्रीयत इत्याह। लघुनीति। एवंजातीयकानामि- 
ति। संयोगव्यवहितानामित्यर्थः। णिचाव्यवहितत्वादिति। चङ्परे णौ यल्लघु तस्मिन्परतोऽभ्यासस्य सन्वद्भावः। अस्मिंस्त्वत्र णौ लघुनीसौ चङ्प-
रः यस्तु चङ्परः न तस्मिन्परतो लघु॥ ॥

दीर्घविधिं प्रतीति। न तु दीर्घे कर्तव्ये भवति स्थानिवत्त्वनिषेधः। सन्वद्भावे तु प्राप्नोति स्थानिवद्भावः। एवं तर्हि दीर्घभावित्वादिकारोऽप्युपचाराद्दीर्घशब्देनोच्यत इति भाष्यकारस्याभिप्रायः। किं तु मुख्ये दीर्घे संभवति गौणग्रहणमयुक्तमिति चिन्त्यमेतत्। वृद्धौ कृतायां लोप इति। एतेनैव डीति सूत्रभाष्येण विरुध्यते तत्र ह्यगिति प्रत्याहारग्रहणसामर्थ्यात् कृतायां वृद्धौ लोप इति प्रतिपादितम्। मीमादीनां त्विति। सनि यद्दृष्टमभ्यासकार्यं तदतिदिश्यते मीमादीनां च सन्यभ्यासस्य लोपो दृष्ट इति सन्वद्भावात्प्राप्नोति। सिद्धं त्विति। नेह कार्यमतिदिश्यते अपि तु रूपं लोपश्चाभावः रूपं लोपो न भवतीति नातिदिश्यते। किं चात्र लोपोऽभ्यासस्येति। अत्र ग्रहणं विषयावधारणार्थं तेनेसादिविषय एवाभ्यासस्य लो

लोपे कृते नास्ति व्यवधानम्। स्थानिवद्भावाद्व्यवधानमेव। प्रतिषिध्यते तत्र स्थानिवद्भावः दीर्घविधिं प्रति न स्थानिवदिति। एवमप्यनग्लोप इति प्रतिषेधः प्राप्नोति। वृद्धौ कृतायां लोपः। तन्नाग्लोप्यङ्गं भवति। एवं तर्हीदमिह संप्रधार्यं वृद्धिः क्रियतां लोप इति। किमत्र कर्तव्यम्। परत्वाद्वृद्धिः। नित्यो लोपः कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि। लोपोऽप्यनित्यः अन्यस्य कृतायां वृद्धौ प्राप्नोत्यकृतायामन्यस्य शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। उभयोरनित्ययोः परत्वाद्वृद्धिः वृद्धौ कृतायां लोपः तन्नाग्लोप्यङ्गं भवति। मीमादीनां तु लोपप्रसङ्गः। मीमादीनां तु लोपः प्राप्नोति। अमीमपत्। सिद्धं तु रूपातिदेशात्। सिद्धमेतत्। कथम्। रूपातिदेशोऽयं सनियादृशमभ्यासरूपं तत्सन्वद्भावेनातिदिश्यते न च मीमादीनां सन्यभ्यासरूपमस्ति। अङ्गान्यत्वाद्वा सिद्धम्। अथ वाण्यन्तमेतदङ्गं मन्यते। लोपे कृते नाङ्गान्यत्वम्। स्थानिवद्भावादङ्गं मन्यते। कथमजिज्ञपत्। अत्र सन्यपि ण्यन्तस्यैवोपादानमाप् ज्ञप्यृधामीदिति। तत्राङ्गान्यत्वाभावादभ्यासलोपः स्यात्। तस्मात्पूर्व एव परिहारः। सिद्धं तु रूपातिदेशादिति। इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमस्य चतुर्थे पादे प्रथममाह्निकम्। पादश्च तुर्योऽध्यायश्च समाप्तः॥ ॥

पो भवतीति तदभावे तु सन्वद्भावान्न भवति। अङ्गान्यत्वादिति। मीमादीनामङ्गानामभ्यासलोपो विहितः। अयं त्वभ्यासो ण्यन्तानामिति न लुप्यते। अन्ये तु व्याचक्षते चङ्परे णौ यदङ्गं तदभ्यासस्य सन्वद्भावो विधीयते णौ मीमादीन्येवाङ्गानि युक्तत्वान्न तदङ्गग्रहणेन ग्रहणात्तस्मादङ्गान्यत्वादित्यस्यायमर्थः। येषामङ्गानामच इत्यादि विधीयते तदभ्यासस्यात्र ग्रहणाद्विषयावधारणाल्लोपो नान्येषामिति। इसादिरहितानाममीमपदित्यादौ च धातोः सन्वद्भावाभावादिसाद्यभावादभ्यासलोपाभावः। अथ वा सकारादौ सन्यभ्यासलोपो विहितो न सन्मात्रे सामान्यातिदेशे विशेषानतिदेशाल्लोपाभावः॥ इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम्। पादश्च तुर्योऽध्यायश्च समाप्तः॥ ॥

॥

॥ विद्योदयोनिराकुर्यादविद्यातिमिरंसदा ॥

॥ श्रीसंकष्टनाशिन्यैनमः ॥

॥ इतिसप्तमः ॥

॥ श्रीविश्वेश्वरायनमः ॥

॥ सहस्रांशुरिवाशेषंमुद्राकिरणराजिभिः ॥

॥ विद्योदयो निराकुर्यादविद्यातिमिरं सदा ॥

## ॥ अथाष्टमाध्याय आरभ्यते ॥

॥ सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः ॥

श्रीगणेशाय नमः॥ सर्वस्य द्वे॥ सर्वशब्दो द्रव्यप्रकारावयवकार्त्स्न्यवृत्तिः। द्रव्यकार्त्स्न्ये यथा सर्वं स्वं ददातीति। प्रकारकार्त्स्न्ये यथा सर्वान्नं भक्षयतीति। सर्वप्रकारमन्नं भुङ्क्ते इति गम्यते। अवयवकार्त्स्न्ये यथा। सर्वः पटो दग्ध इति। इह तु पर्यादीनां विशिष्टार्थानां कार्यित्वेनोपादानाद्द्रव्यप्रकारकार्त्स्न्यासंभवादवयवकार्त्स्न्यवृत्तिः सर्वशब्दः तस्योपादानमलोऽन्त्यनिवृत्त्यर्थं वा स्यात् द्विःप्रयोगनिवृत्तये स्थानषष्ठ्यर्थं वा। तत्र वक्ष्यमाणैर्लिङ्गसामर्थ्यादिभिरलोऽन्त्यनिवृत्तिं षष्ठ्यर्थप्रक्लृप्तिं च सिद्धां मत्वा स्थाने द्विर्वचनस्य द्विःप्रयोगद्विर्वचनस्य च फलभेदमपश्यन् पृच्छति। सर्ववचनमिति। अलोऽन्त्यनिवृत्त्यर्थमिति। ननु सर्वस्येत्यस्मिन्नसति स्थानषष्ठ्यभावादनुसंहाराभावः। स्थाने विज्ञातस्यानुसंहार इत्युक्तत्वात्। कथं चान्त्यस्य द्विर्वचनं प्राप्नोति। यावताऽनेकाल्त्वात्सर्वादेशेन तेन भाव्यम्। उच्यते। परेर्वर्जन इत्यादौ तावत्षष्ठी विद्यत एव। नित्यवीप्सयोरित्यत्रापि सामर्थ्याल्लभ्या षष्ठी। य

श्रीगणेशाय नमः॥ सर्वस्य द्वे। सर्ववचनं किमर्थम्। सर्ववचनमलोऽन्त्यनिवृत्त्यर्थम्। सर्वग्रहणं क्रियते अलोऽन्त्यनिवृत्त्यर्थम्। अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य द्विर्वचनं मा भूदिति। क्व पुनरलोऽन्त्यनिवृत्त्यर्थेनार्थः सर्वग्रहणेन। नित्यवीप्सयोरिति। नित्यवीप्सयोरित्युच्यते न चान्त्यस्य द्विर्वचने नित्यता वीप्सा वा गम्यते। इह तर्हि परेर्वर्जन इति अत्र अन्त्यस्यापि द्विर्वचने वर्ज्यमानता गम्येत षष्ठीनिर्देशार्थं च सर्वग्रहणं कर्त्तव्यं षष्ठीनिर्देशो यथा प्रकल्प्येत। अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः। अक्रियमाणे हि सर्वग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात्॥ ॥ ॥

श्चोक्तमनेकाल्त्वात्सर्वादेशो भविष्यतीति। हलन्तेष्वेतत्स्यात्। अजन्तेषु तु पर्यादिष्विकारादेरन्त्यस्य प्राप्नोति। ननु द्व्यविकारौ सर्वस्य स्यातां यथा डा आ डा इति प्रश्लेषनिर्देशात्सर्वादेशो डा भवति। उच्यते। द्व्यविकारौ कृते कादेशावादेशत्वं प्रतिपद्येते इत्येकाल्त्वादादेशोऽलोऽन्त्यस्य प्राप्नोति। डास्तु प्रश्लेषनिर्देशसामर्थ्याद्धि गृहीतरूपः सर्वादेशत्वं प्रतिपद्य सवर्णदीर्घत्वं प्रतिपद्यते। क्व पुनरिति। नित्यादिरर्थोऽन्त्यद्विर्वचनेन न द्योतयितुं शक्य त इति भावः। अन्त्यस्यापीति। यथान्तरेण द्विर्वचनं परिवर्जनार्थः प्रयुज्यते परि त्रिगर्त्तेभ्य इति। अत एवोच्यते परे वर्जने वा वचनमिति। एवमन्त्यस्यापि द्विर्वचने परेर्वर्जनं प्रतीयेत। षष्ठीनिर्देशार्थं चेति। इष्टस्य षष्ठ्यर्थस्य प्रक्लृप्त्यर्थमित्यर्थः॥

कस्येति। नित्यवीप्सयोरर्थः शब्दस्तस्य द्वे इति सामर्थ्याल्लभ्यत इति भावः। इतरः शब्दमन्तरेणानन्वयादिरपि संबन्धः सामर्थ्याद्धि ज्ञायेतेति मत्वाह। स्थानेयोगत्वस्येति। क्व पुनरिति। षष्ठी सर्वत्र विद्यत इति भावः॥ ननु चैषैवेति। नित्यार्थवचनः शब्दो नित्यो वीप्सार्थवचनश्च वीप्सेत्याश्रीयत इति भावः। अर्थनिर्देश इति। नयोक्तधर्मो वीप्साया यथाभावाधानत्वभिधेयधर्मः। यद्ध्यस्य ते वीप्सम्येत्कर्त्ता भवतीति। वीप्साया अर्थात्ते नित्यशब्दोऽप्यर्थवृत्तिरेव ग्राह्यो द्वन्द्वनिर्देशाद्भिन्नविभक्तिकत्वायोगात्। अलोऽन्त्यनिवृत्त्यर्थेनेति। मनु च नित्यवीप्सयोरित्यत्रार्थाश्रयणेन पूर्वमेवालोऽन्त्यविधिर्निवारितः। तत्किमर्थं नित्यवीप्सयोरित्युपादीयते। परेर्वर्जन इत्यादिह्युपादेयं प्रकरणोपलक्षणार्थत्वात्सर्वे

कस्य। स्थानेयोगत्वस्य। क्व पुनरिह षष्ठीनिर्देशार्थेनार्थः सर्वग्रहणेन॥ यावता सर्वत्रैव षष्ठ्युच्चार्यते। परेर्वर्जने। प्रसमुपोदः पादपूरणे। उपर्यध्यधसः सामीप्ये। वाक्यादेरामन्त्रितस्येति। इह न कांचित् षष्ठीं नित्यवीप्सयोरिति॥ ननु चैषैव षष्ठी। नैषा षष्ठी। किं तर्हि। अर्थनिर्देश एषः। नित्ये चार्थे वीप्सायां चेति। अलोऽन्त्यनिवृत्त्यर्थेन तावन्नार्थः सर्वग्रहणेन। इदं तावदयं प्रष्टव्यः। नित्यवीप्सयोर्द्वे भवत इत्युच्यते द्विशब्द आदेशः कस्मान्न भवति। आचार्यप्रवृत्तिर्ज्ञापयति न द्विशब्द आदेशो भवतीति। यदयं तस्य परमाम्रेडितमनुदात्तं चेत्याह। कथं कृत्वा ज्ञापकम्। द्विशब्दोऽयमेकाच् न तस्यैकत्वात्तस्य परमाम्रेडितमनुदात्तं चेत्येतन्नास्ति। पश्यति त्वाचार्यो न द्विशब्द आदेशो भवतीति ततस्तस्य परमाम्रेडितमनुदात्तं चेत्याह। यदि तर्हि न द्विशब्द आदेशो भवति केनेदानीं द्वे भवतः। द्विशब्देन यदुच्यते॥ ॥ ॥ ॥

पुवासूत्रेषु परिहारस्य तुल्यत्वाद्दोषः। कथं पुनर्द्विशब्द आदेशः संभाव्यते यावता ग्रामो ग्राम इत्यस्मिन्नर्थे प्रतिपाद्ये द्विशब्दो न प्रवर्त्तते। पराभिप्रायेणैतदुच्यते। यथा भवान् सामर्थ्यादिन्यायत्यागेन शास्त्रसद्भावमात्रेणालोऽन्त्यविधिं मन्यते तथा स्वं रूपं शब्दस्येति शास्त्रप्रामाण्याद्द्विशब्दः प्राप्नोति न्यायाश्रये तु स्वरूपविधिवदलोऽन्त्यविधिर्न भविष्यति आचार्यप्रवृत्तिरिति। न्यायसिद्धेऽर्थे लिङ्गदर्शनम्। नहि द्विशब्द आदेशो ग्रामादिशब्दस्यार्थं वक्तुं समर्थ इति न शवर्त्तते। नाम्रेडितस्यान्त्यस्य तु वा नित्यमाम्रेडिते डाचीत्येतदपि लिङ्गं द्रष्टव्यम्।

भा॰ ८ यदि तर्हीति पृष्टे द्विशब्देन यदुच्यत इत्युत्तरउक्ते, पिसामान्याभिधानाद्विशेषो दुर्ज्ञान इति पृच्छति॥१॥९॥
२ किंपुनस्तदिति। संख्येयमर्थ इति॥ अभिधेयमित्यर्थः। यदुच्यते। आदशाभ्यः संख्याः संख्येये वर्तन्ते॥ तदुक्तन्त्वरं संख्यानेसं
ख्येये चेति। पदे इति। शब्दानुशासनप्रस्तावाच्छब्दप्रकारोपन्यासः। यदा तावन्मात्रे इति। यदुक्तम्। द्वाविकारौ कृते कादेशा
विकालादेशोऽन्त्यस्य प्राप्नोतीति। तदयुक्तम्। न ह्यप्रवृत्तयोरेकादेशशास्त्रप्रवृत्तिरस्ति प्रवृत्तिकाले चानेकाल्त्वात्सर्वादे
शत्वमिति नान्त्यलोऽन्त्यविधिः। यदा तर्हीति। परिशब्देकारस्य द्वे अर्धमात्रे। अलुग्रहणेनार्धमात्रायाअग्रहणादनेकाल्
त्वाभावात्प्राप्नुतः। इहेति। विशिष्टमर्द्धमात्राद्वयमुच्चारणायोगाद्‌अशक्यआदेशः कर्तुम्। तस्यादितउदात्तमर्द्धह्रस्वमित्यने

किंपुनस्तत्। द्विशब्दोयं संख्यापदम्। संख्या याश्च संख्येयमर्थः। संख्येये द्वे भविष्यतः। के पुनस्ते। पदे। वा
क्ये। मात्रे वा। तद्यदा तावत्पदे वाक्ये वा तदानेकाल्त्वात्सर्वस्यादेशः सिद्धः। यदा तावद्मात्रे अपि तदाने
काल्शित्सर्वस्येति सर्वादेशो भविष्यति। यदा तर्ह्यर्धमात्रे तदा सर्वादेशो न सिध्यति। नैष दोषः। तदापि सिद्धः।
न चार्द्धमात्रे द्विरुच्येते। किंकारणम्। इह व्याकरणे यः सर्वेल्पीयान्स्वरव्यवहारः स मात्रया भवति। नार्धमात्र
याव्यवहारोस्ति। तेनार्द्धमात्रेन भविष्यतः। एवमपि कुत एतत् पदे द्वे भविष्यत इति। न पुनर्वाक्ये स्याताम्।
मात्रे वा। नित्यवीप्सयोर्द्वे भवत इत्युच्यते। न च वाक्यद्विर्वचने मात्राद्विर्वचने वा नित्यता वीप्सा वा गम्यते। षष्ठी
निर्दिष्टार्थमेव तर्हि सर्वग्रहणं कर्त्तव्यम्। न वा पदाधिकारात्। न वा वक्तव्यम्। किंकारणम्। पदाधिकारात्। प
दस्येति प्रकृत्य द्विर्वचनं वक्ष्यामि। तच्चावश्यं पदग्रहणं कर्त्तव्यं समासतद्धितवाक्यनिवृत्त्यर्थं च। समासनि
वृत्त्यर्थं तावत्। सप्तपर्णोऽष्टापदम्। तद्धितनिवृत्त्यर्थम्।

१ ननु ह्रस्वादिवर्णस्यायाअर्द्धमात्रायाग्रुणाख्यानं क्रि
यते। न च वाक्यद्विर्वचनमिति। नित्यत्वाद्यर्थप्रतिपादनायतत्प्रतिपादनसमर्थः शब्दः प्रयुज्यते स्थानेऽन्तरतम इत्युपस्था
नाच्च शब्दतोर्थतश्चान्तरतमे एव द्वे पदे आदेशौ भवतः। परेर्वर्जन इत्यादौ तु पर्यादिशब्दसन्निधानाद्द्विशब्दः पर्यादीने राम॰
व संख्येयानाचष्ट इति वाक्ये मात्रे पदे अपि येके चिन्न प्रवर्त्तेते। न वेति। शब्दान्तरं षष्ठ्यन्तमुपादेयम्। को विशेष इति चेदा
ह। तच्चेति। सप्तपर्ण इति। सप्त संख्यानि पर्णान्यवीप्स्यन्ते न तु तद्वान्वृक्ष इति वीप्सायामेकत्वस्यानन्तर्भावात्प्रागेव विभक्तेर्द्विर्वच २
नं प्राप्नोति। सप्तपर्णः सप्तपर्ण इति। पदाधिकारात्तु न भवति॥

द्विपदिकेति। द्वित्वसंख्यायुक्तः पदार्थो वीप्स्यत इति वीप्सायां स्त्रीत्वैकत्वलक्षणयोर्लिङ्गसंख्ययोरनन्तर्भावात् प्राक्
तद्धितोत्पत्तेः समासे कृते पदत्वाभावाद् द्विर्वचनाभावः॥ ग्रामे ग्रामे पानीयमिति। वाक्यस्यापदत्वाद् द्विर्वचनाभावः। अ
थेति। सप्तपर्ण इत्यत्र संख्याया वीप्सा। अथ पर्णानाम्। अथ संख्याविशिष्टानां पर्णानाम्। तत्र यदि समुदायो वीप्स्यते तदा
समुदायस्य प्राप्तं द्विर्वचनं पदाधिकारेण निवर्त्यते। अथ त्ववयवार्थवीप्सा तदावयवस्य प्राप्तं द्विर्वचनमिति समासे विधीयमा
नस्य निवृत्त्यर्थमित्यर्थः संपद्यते। एवं वाक्यतद्धितयोर्योज्यम्। यदि विज्ञायत इति। यदि समुदायो वीप्सायुक्त इति पक्षः। सिद्धं स

द्विपदिका। त्रिपदिका। माषशः। कार्षापणशः। वाक्यनिवृत्त्यर्थम्। ग्रामे ग्रामे पानीयम्। माषं माषं देहि इति।
अथ क्रियमाणेऽपि वै पदग्रहणे समासनिवृत्त्यर्थमिति कथमिदं विज्ञायते। समासस्य निवृत्त्यर्थं समास
निवृत्त्यर्थमाहोस्वित् समासेन निवृत्त्यर्थं समासनिवृत्त्यर्थमिति। किं चातः। यदि विज्ञायते समासस्य निवृत्त्य
र्थं समासनिवृत्त्यर्थमिति। सिद्धं सप्तपर्णः सप्तपर्णौ सप्तपर्णा इति। सप्तपर्णाभ्यां सप्तपर्णेभ्य इत्यत्र प्राप्नोति
। अथ विज्ञायते समासेन निवृत्त्यर्थं समासनिवृत्त्यर्थमिति। सप्तपर्णः सप्तपर्णौ सप्तपर्णा इत्यत्रापि प्राप्नोति
। तथा तद्धितनिवृत्त्यर्थमिति कथमिदं विज्ञायते तद्धितस्य निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति। आहोस्वित् तद्धि
तेन निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति। किं चातः। यदि विज्ञायते तद्धितस्य निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति।
सिद्धं द्विपदिका इति। द्विपदिकाभ्यां त्रिपदिकाभ्याम्। माषशः। कर्षापणश इत्यत्र प्राप्नोति॥ अथ विज्ञायते
तद्धितेन निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति। द्विपदिकाः त्रिपदिकाः इत्यत्रापि प्राप्नोति। तथा वाक्यनिवृत्त्यर्थमिति
कथमिदं विज्ञायते वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति। आहोस्विद् वाक्येन निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमि
ति। किं चातः। यदि विज्ञायते वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति॥

प्तपर्ण इति। विभक्तौ परतः समासस्यापदत्वात्। सप्तपर्णाभ्यामिति। स्वादिषु पूर्वस्य पदत्वाद् द्विर्वचनप्रसङ्गः। अथेति। यद्यवयवा
र्थवीप्सा तदा समासे प्रत्ययलक्षणेनावयवस्य पदत्वाद् द्विर्वचनप्रसङ्गः। उत्तरपदस्यानुत्तरपदत्वे चापदादिविधाविति प्रत्ययल
क्षणप्रतिषेधात् पदत्वाभावः। सिद्धं द्विपदिका इति। हल्ङ्यादिलोपे तद्धितान्तस्य पदत्वाद् द्विपदिका इति बहुवचनान्तं पठितव्य
म्। द्विपदिकाभ्यामिति। एकादेशस्यान्तवद्भावात् तद्धितान्तं स्वादिष्विति पदं त्वा। माषश इति। प्रत्ययलक्षणेन सुबन्तं तद्धितान्तं च॥ ॥

वाक्यं वीप्सायुक्तमिति। वाक्यार्थस्य वीप्सायोगाभावाद्वीप्साग्रहणं द्विर्वचननिमित्तोपलक्षणं तेन प्रपचति प्रपचतीति नित्यतायां वाक्यस्य द्विर्वचनं भवत्येव। अथेति। यदा ग्रामार्थस्य वीप्सा तदा ग्रामे ग्रामे पानीयमिति भवति। यदा पानीयस्य तदा ग्रामे पानीयं पानीयं स्वाद्विति भवति। तदेतदिति। अतिव्याप्तिर्न कथंचित्परिहर्त्तुं शक्यते। सगतिग्रहणं चेति। पदाधिकारे क्रियमाणे सगतिग्रहणमधिकं कर्त्तव्यम्। भाष्यकारः पदाधिकारेण विनापि समासादिनिवृत्तिं प्रतिपादनाया ह। समासेनेति। सप्तपर्ण इति रूढिशब्दः परिगृहीतावयवार्थविशेषो वृक्षविशेषे वर्त्तत इत्यर्थः। किंच भो इति। ननु नवचनाद्यं शब्दः प्रत्याययति किं तर्हि स्वसामर्थ्यात्। एवं मन्यते वाक्ये द्विर्वचनेन वीप्सा व्यज्यते सप्तसप्तपर्णान्यस्येति। एवं समासेपि

यदि वाक्यं वीप्सायुक्तं भवितव्यमेव हि द्विर्वचनेन॥ अथाप्यवयवः भवत्येव। तदेतत्क्रियमाणेपि पदग्रहणे आलूनविशीर्णं भवति। किंचित्संगृहीतं किंचिदसंगृहीतं च। सगतिग्रहणं च कर्त्तव्यम्। प्रपचति प्रपचति प्रकरोति प्रकरोतीति। कि पुनः कारणं न सिध्यति। न हि सगतिकं पदं भवति। समासनिवृत्त्यर्थेन तावन्नार्थः पदग्रहणेन। समासेनोक्तत्वाद्वीप्सायाः द्विर्वचनं न भविष्यति। किंच भोः समासो वीप्सायामित्युच्यते। न खलु वीप्सायामित्युच्यते। गम्यते तु सोर्थः। ततः किमुक्तः समासेनेति कृत्वा द्विर्वचनं न भविष्यति॥ यत्र च समासेनानुक्ता वीप्सा भवति तत्र हि द्विर्वचनम्। तद्यथा ‑ एकैकविचिताः अन्योन्यसहाया इति॥ अथवा यदत्र वीप्सायुक्तं नादः प्रयुज्यते। किं पुनस्तत्। पर्वणि पर्वणि सप्तपर्णान्यस्य। पङ्क्तौ पङ्क्तौ अष्टपदान्यस्येति॥ न हि तन्निवृत्त्यर्थेन चापि नार्थः पदग्रहणेन॥

वीप्साप्रतिपादनाय द्विर्वचनस्य प्रसङ्गात् प्रतिषेधो विधेयो नित्यवीप्सयोरसमास इति। यथावस्थिते परेरसमास इति॥ न खल्विति। रूढिशब्दत्वादस्याक्षिप्तवीप्सोऽवयवार्थो यथा त्रिदशा इत्यादावाक्षिप्तसुजर्थो न्येहि वाक्यधर्मा अन्ये वृत्तिधर्मास्ततः समासेनोक्तत्वादित्यस्यायमर्थः समासेनाभिव्यक्तत्वादिति। यत्र चेति। योन रूढिशब्दः एकैकविचिता इति। एकैकेन विचिताः अन्योन्यसहाया इति। अन्योन्यस्य सहाया इत्यर्थः। अत्र कर्मव्यतिहारो द्विर्वचनद्योत्यः। अथवेति। न चाप्रयुज्यमानस्य द्विर्वचनसंभवः। गतार्थत्वाच्च पर्वादिशब्दस्याप्रयोगो रूढिशब्दत्वाच्च गतार्थत्वम्॥ ॥ ॥

राम
३

तद्धितेनेति। तद्धितस्य स्वार्थिकत्वाद् अभिव्यक्तिरेवोक्तिर्विवक्षिता। एकैकश इति। केचिदाहुरल्पार्थेप्येकशब्दो ऽस्ति तस्य वीप्सायां द्विर्वचने बह्वल्पार्थादिति शस्प्रत्ययो ऽन्ये त्वाहुरेकैकमेकैकस्मै ददाति कर्मसंप्रदानवीप्साद्वयप्रतिपादनाय शस्द्विर्वचने भवत इति। तदयुक्तम्। एकेन पदेन युगपत्कारकद्वयस्याभिधाना ऽसंभवात्। पदद्विर्वचनेनोक्तत्वादिति आधारवीप्सायाधेयवीप्साया आक्षेपादाधेयवाचिपदद्विर्वचनाभावः। यत्र चेति। अड्डादिव्यवस्थार्थं धातूपसर्गयोः

तद्धितेनोक्तत्वात् वीप्साया द्विर्वचनं भविष्यति। तद्धितः खल्वपि वीप्सायामित्युच्यते। यत्र तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्। तद्यथा। एकैकशो ददातीति। वाक्यनिवृत्त्यर्थे न चापि नार्थः पदग्रहणेन। पदद्विर्वचनेनोक्तत्वात् वीप्साया वाक्यद्विर्वचनं न भविष्यति। यत्र च पदद्विर्वचनेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम्। तद्यथा। प्रपचति प्रपचति प्रकरोति प्रकरोतीति। उत्तरार्थं तर्हि पदग्रहणं कर्त्तव्यम्। तस्य परमाम्रेडितमनुदात्तं चेति वक्ष्यते। तत्पदद्विर्वचने यथा स्यात्। वाक्यद्विर्वचने यथा स्यात्। वाक्यद्विर्वचने मा भूत्। महांग्रहीष्यति महांग्रहीष्यति मामभिव्याहरिष्यति मामभिव्याहरिष्यतीति। कथं चात्र द्विर्वचनम्। छान्दसत्वात्। स्वरो ऽपि तर्हि च्छान्दसत्वादेव न भविष्यति। उत्तरार्थमेव तर्हि पदग्रहणं कर्त्तव्यम्। पदस्य पदादिति वक्ष्यति तत्पदग्रहणं न कर्त्तव्यं भवति। सर्वग्रहणमपि तर्ह्युत्तरार्थमनुदात्तं सर्वमपादादाविति वक्ष्यति तत्सर्वग्रहणं न कर्त्तव्यं भवति। उभयं क्रियते तन्त्रे च॥

पृथक्कल्पनेपि परमार्थतः समुदायस्य क्रियाविशेषवाचित्वान्नित्यताप्रतिपादनाय पदसमुदायस्य द्विर्वचनमित्यर्थः वीप्सायां नित्यत्वं लक्ष्यते। महामिति। आबाधे चेति द्विर्वचनमित्याहुः। कथमिति। आबाधस्यासंप्रत्ययादर्थान्तरस्य च द्विर्वचननिमित्तस्याभावाद् द्विर्वचनाप्रसङ्गः। स्वरो ऽपीति। अनुदात्तत्वाभावे प्रकृतिस्वरो भवति। उत्तरार्थमिति। सर्वस्येत्यपनीयपदस्येति क्रियमाणं मण्डूकप्लुतिन्यायेन द्विर्वचनप्रकरणमुल्लङ्घ्योत्तरत्रोपतिष्ठते॥ ॥

